॥ वेदस्य ब्रह्मपरतन्त्रत्वनिरूपणं एकोनविंशम् ॥

यस्यैष निःश्वसितमेव तु वेदराशि-
यंत् प्राप्यते परमयोगिभिरात्मभूतम् ।
यच्चाखिलश्रुतिशिरःपर[१]मद्वितीयं
तस्मै निरस्ततिमिराय नमोऽक्षराय ॥

सम्प्रति विचार्यते 'किं वेदः चेतनवत् स्वतन्त्रः किं वा ब्रह्मपरतन्त्रः ?' इति । तत्र मीमांसका मन्यन्ते । वेदः स्वतन्त्रो भवितुमर्हति, अपेक्षा[२]कारणाभावात् । तथा हि 'किं वेदशब्दोपलक्षितवर्णानां उत्पत्तौ कारणापेक्षा, किं वा वर्णात्मनो[३] शब्दस्य नित्यत्वेऽपि पदपदार्थसम्बन्ध[४]सङ्केतापेक्षा, अथ वा वाच्यवाचकसम्बन्धनित्यत्वेऽपि विशिष्टार्थप्रतिपत्तिमुद्दिश्य वाक्यरचनायां अपेक्षा वेदस्योच्यते ?' इति । तत्र न तावत् उत्पत्तिकारणापेक्षा, शब्दस्य नित्यत्वात् । ननु [५]अनित्यःशब्दः, प्रत्युच्चारणं अन्यथा[६]न्यथा प्रतीयमानत्वात् । तथा हि— अदृश्यमानः पुरुषविशेषोऽ[७]पि अध्ययनध्वनि[८]श्रवणादेव विशेषतो निर्धार्यते[९] 'देवदत्तोऽयमधीयते, य[१०]ज्ञदत्तोऽयमधीयते' इति । न हि शब्देन अन्यथात्वावगममन्तरेण उच्चारणभेदेन पुरुषविशेषानुमानमवकल्पते । तदयं प्रयोगः "शब्दो धर्मी; जन्मविनाशवान् इति साध्यो धर्मः; प्रत्युच्चारणमन्यथा प्रतीयमानत्वात्; यदेवं तत्तथा, यथोदात्तादिविज्ञानम्; तथा चायं शब्दः; तस्मात्

---

१. B: पद्

२. B: कारणापेक्षाभावात्

३. B E: वर्णात्मनः

४. B omits सम्बन्ध

५. B: नित्यः, a mistake

६. B has only one अन्यथा

७. B omits अपि

८. B: ध्वनिवत्

९. B omits निर्धार्यते

१०. A omits यज्ञदत्तोऽयमधीयते

तथा'' इति। तदयुक्तम्, हेतोः व्यधिकरणासिद्धत्वात्। ध्वनिरेव [1]हि अन्यथान्यथा प्रतीयते। न वर्णानां अन्यथाप्रतीतिरस्ति, सर्वप्रयोगेषु तेषामेव 'त एवामी [2]गकारादयः' इति प्रत्यभिज्ञायमानत्वात्। न च वाच्यम् 'ध्वनिव्यतिरिक्तो न वर्णो नामास्ति' इति। ध्व[3]निव्यनिरिक्तवर्णस्य स्वा[4]नुभवसिद्धत्वात्। तथा हि—दूरादाकर्णयतो वर्णविशेषमप्रतिपद्यमानस्य झटिति कर्णपथमवतरति ध्वनिः। प्रत्यासीदतश्च वर्णविशेषप्रतीतिरुदयमधिरोहति। तत्र अनुमानप्रयोगो[5]ऽपि भवति—विवादास्पदीभूतो ध्वनिः वर्णव्यतिरिक्तो भवितुमर्हति; तस्मिन्ननुपलभ्यामानेऽप्युपलभ्यमानत्वात्; यो यस्मिन् अनुपलभ्यमानेऽपि उपलभ्यते, स तद्व्यतिरिक्तो दृष्टः, यथा रूपात् रसः; तथा चायम्; तस्मात् तथा—इति। अत एवायं अन्यथात्वप्रत्ययो ध्वनिविषयो न वर्णविषयः। 'त एवामी गकारादयः' इति प्रत्यभिज्ञाबाधि[6]तपक्षत्वात् कालात्ययापदिष्टश्च हेतुः। स्यादेतत्—केशादिष्विव सादृश्यनिबन्धना प्रत्यभिज्ञा, न वस्त्वेकत्वनिमित्ता—इति। तदसत्, प्रत्युच्चारणं भेदसिद्धौ सादृ[7]श्यकल्पना, सादृश्यकल्पनया भेदसिद्धिः, इति परस्पराश्रयत्वप्रसङ्गात्। इह च अबाधितप्रत्यभिज्ञा वस्त्वेकत्वमे[8]व अवगमयति। अथ आकृतिनिबन्धना प्रत्यभिज्ञा प्रतिज्ञायेत, तदपि न मनोहरम्; व्यक्तिप्रत्यभिज्ञानात् 'द्वि[9]र्गोशब्द उच्चारितः' इति हि[10] प्रतीतिः, न तु[11] द्वौ गोशब्दौ इति। व्यक्तिभेदे तु द्वौ गो[12]शब्दौ इत्येव स्यात् प्रतीतिः। तस्मात् अस्त्येव प्रत्यभि[13]ज्ञाविरोधः। अत एव एतदप्यपास्तम् 'अनित्यः शब्दः, प्रयत्नान[14]न्तर-

---

१. B omits हि and has only one अन्यथा
२. B: नकारा
३. A omits ध्वनि
४. E: स्वभावसिद्धत्वात्
५. B- प्रयोगो
६. B. प्रत्यक्षबाधित
७. B E omit this word
८. E omits एव
९. E: विप्रोशब्द, a mistake
१०. A E omit हि
११. A E omit तु
१२. E omits गो
१३. B: प्रत्यभिज्ञाप्रत्यक्षविरोधः
१४. E: प्रयत्नान्तरी

रीयकत्वात्, सुखादिवत्' इति, तत्रापि हेतोः प्रत्यभिज्ञाबाधित[1]तपक्षत्वात्। अपि च हेत्वर्थो विविच्यताम् 'किं प्रयत्नानन्तरीयकत्वात्[2] उत प्रयत्नानन्तरीयको[3]पलब्धित्वात्?' इति। पूर्वत्र अन्यतरासिद्धो हेतुः; उत्तरत्र अनेकान्तिकः, प्रयत्नानन्तरोपलब्धकूपोदकादिषु[4]।

अथोच्येत 'अनित्यः शब्दः, विभु[5]द्रव्यविशेषगुणत्वात्, सुखादिवत्' इति, तदपि प[6]रपरिकल्पितेश्वरबुद्धावनैकान्तिकः। अथ 'अनीश्वरधर्मत्वे सति' इति हेतुं विशिंष्याः, तदापि प्रत्यभिज्ञाविरोधः तदव[7]स्थ एव। असिद्धश्च; वार्तिककारीयाणां शब्दस्य द्रव्यत्वाभ्युपगमात्। अनुमानान्तरं तर्हि भविष्यति—अनित्यः शब्दः; सामान्यवत्वे सति अस्मदादिबाह्येन्द्रियग्राह्य[8]त्वात्, घटादिवत्—इति। तदपि प्रत्यभिज्ञोन्मूलितत्वात्[9] न प्रमाणपद्धतिमध्यास्ते। विरुद्धाव्यभिचारी च हेतुः 'नित्यः शब्दः; शब्दाकाशसम्बन्ध[10]सम्बन्धित्वात्, आकाशवत्' इति। तस्मान्नित्यत्वात् न शब्दस्य उत्पत्तिकारणापेक्षा।

स्यान्मतम्—वर्णात्मना वेदशब्दस्य नित्यत्वेऽपि वाच्यवाचकसम्बन्धस्य इदंप्रथमतया तत्सङ्केतापेक्षा भवति। तथा चायं प्रयोगः 'विमत्यापन्नः शब्दार्थसम्बन्धः साङ्केतिको भवितुमर्हति; वाच्यवाचकसम्बन्धत्वात्, देवदत्तादिशब्दार्थसम्बन्धवत्—इति। तदपि नातिचतुरश्रम्, सङ्केतासंभवात्। तथा हि। इदमत्र विवेक्तव्यम् 'किं स[11]र्गकाले सकलमिदं शब्दार्थसम्बन्धं एक एव सङ्केतयेत्, आहो-

---

१. B: विरोधपक्षत्वात्

२. E: त्नान्तरीयक

३. E: त्नान्तरीयको

४. A E: मूलोदकादिषु

५. B omits विभु

६. B: तदभ्युपरिकल्पित

७. E: तदवस्थित

८. A B: ग्राहक

९. E: प्रत्यभिज्ञामूलकत्वात्

१०. B: असम्बन्धित्वात्; E: शब्दाकाशसम्बन्धादेव दत्तशब्दार्थसम्बन्धत्वात् न शब्दस्य etc.

११. E: संसर्ग

स्वित् अनेके संभूय सङ्केतयेयुः ?' इति । पूर्वस्मिन् इतरेषां तद[1]भिप्रायानवगमात् प्रकारान्तरेण शब्दार्थसम्बन्धापरिज्ञानाच्च न शब्दार्थव्यवहारसिद्धिः । उत्तरस्मिन् तेषां सर्वेषां[2] सर्वज्ञत्वे सति अनेकेश्वरत्वप्रसङ्गः । असर्वज्ञत्वे सति अन्योन्याभिप्रायापरिज्ञानात् शब्दार्थव्यवहाराभावप्रसङ्गः । तस्मात् अर्थापत्तिविरोधात् हेत्वाभासोऽयम् । सत्प्रतिसाधनश्च । विवादाध्यासितः सर्गकालीनः [अभि[3]धानाभिधेयव्यवहारः पूर्वपूर्वतथाविधव्यवहारानुस्मृतिनिबन्धनः ; अभिधानाभिधेयव्यवहारत्वात् , यथा इदानींतनाभिधानाभिधेयव्यवहारः । न च साङ्केतिकशब्देषु अनैकान्तिकत्वमाशङ्कनीयम् ,] अभिधानत्वाभावात्तेषाम् । आकृतिवाचकाः शब्दाः सर्वदेशेषु अविभागात् अभिधायिनो वा अभिधानानि । न[4] हि साङ्केतिकशब्देषु एतत्सम[5]स्ति । तस्मा[6]त् न शब्दस्य वाच्यवाचकसम्बन्धे सापेक्षत्वम् ।

अथ मतम्—वाच्यवाचकसम्बन्धे अनादिसिद्धेऽपि[7] विशिष्टार्थप्रत्ययमुद्दिश्य वाक्यविरचनं शब्दस्य पुरुषापेक्षमेव, लौकिकाप्तवाक्येषु तथा दर्शनात् । तद[8]यं प्रयोगः 'विगीतो[9] वेदः [[10]स्वार्थप्रमाणान्तरजन्यो न ; आप्तप्रणीतवाक्यत्वात् , लौकिकाप्तवाक्यवत् , इति । तदपि न घटामुपैति, हेतोः सन्दिग्धप्रयोजकत्वात् , 'किंसंभवं] प्रमाणान्तरार्थवि[11]षयत्वात् लौकिकवाक्यस्य स्वार्थप्रवृत्तप्रमाणान्तरजन्यत्वम् , अथ वा अनाप्त[12]प्रणीतत्वात् ?' इति । विपरीतानुमानसंभवाच्च—विवादाध्यासितो वेदः स्वार्थप्रवृत्तप्रमाणान्तरजन्यो [13]न भवति ; असर्वज्ञाप्रणीतत्वे सति धर्माधर्मप्रमाण-

---

१. E: तदवगमात्
२. B omits सर्वेषां
३. E omits the part within brackets
४. E omits न हि
५. B omits समस्ति
६. E: कस्मात् for तस्मात्
७. E omits अपि
८. E omits तत्
९. E: विगतो
१०. E omits the portion within brackets.
११. E omits विषय
१२. E: अथाप्तप्रणीत
१३. E omits न

त्वात्, परिकल्पितेश्वरबुद्धिवत्—इति। तस्मात् अपेक्षाकारणाभावात् "स्वयम्भु[१] ब्रह्मणे (Bṛh. II. 6. 3)" इति श्रुतेश्च स्वतन्त्रो वेदः इति।

अत्राभिधीयते। यद्यपि नित्यो वेदः, स्वयं नित्यार्थसम्बन्धश्च, तथापि ब्रह्मचैतन्यविवर्तो[२] ब्रह्मपरतन्त्रश्च वेदोऽभ्युपेयः। तथा च श्रुतिः "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" (Bṛh. II. 4. 10) इत्यादिना वेदस्य स्वार्थप्रवृत्तप्रमाणान्तरा[३]जन्यत्वं ब्रह्मविवर्त[४]तां च दर्शयति। अपि च "एकमेवाद्वितीयम् (Ch. VI. 2. 1)" इति ब्रह्मणः अद्वितीयत्वप्रतिपादनात् "आत्मनि विज्ञाते सर्वमिदं विज्ञातम् (Bṛh. IV. 5. 6)" इति आत्मविज्ञानेन सर्वविज्ञान[५]प्रतिज्ञानाच्च ब्रह्मचैतन्यविवर्तो वेदः। न हि वेदे वस्त्वन्तरे अवतिष्ठमाने सति ब्रह्मणोऽद्वितीयत्वं तद्विज्ञानेन सर्वविज्ञानप्रतिज्ञानं[६] चोपपनीप[७]द्यते। ब्रह्मविवर्ते तु समस्तनामरूपप्रपञ्चे तद्व्यतिरिक्तवस्त्वन्तराभावात् सर्वमेतदुपपद्यते।

ननु वेदस्य ब्रह्मविवर्तत्वे सति कथं अनादित्ववाचोयुक्तिः? कथं वा[८] रज्जुसर्पवत् मिथ्याभूतस्य प्रामाण्यमवकल्पते[९]? उच्यते। न तावत् वर्णमात्रं[१०] वेदः, अक्रमव्युत्क्रमोच्चरितेषु वर्णेषु अर्थप्रतिपत्त्यदर्शनात्। किं तु निय[११]तक्रमविशिष्टो वर्णराशिर्वेदः। तत्र न तावत् देशनिमित्तः का[१२]लनिमित्तो वा क्रमः संभवति, वर्णानां सर्वगतत्वात्, [१३]नित्यत्वाच्च। नापि स्वाभाविकः कश्चित् क्रमोऽस्ति, 'राजा, जारा' इत्याद्यनियत-

---

१. A E: स्वयं ब्रह्मेति
२. E: विपत्तौ for विवर्तो
३. B: जन्यत्वं
४. E: वित्ताञ्च
५. E omits सर्वविज्ञान
६. A E: विज्ञानं and omit प्रतिज्ञानं
७. E: उपपद्यते
८. E omits वा and reads रज्जुवन्मिथ्या
९. A E: कल्प्यते
१०. B: मात्रा वेदाः
११. E omits नियत
१२. A E omit कालनिमित्त
१३. B: अनित्य

पूर्वापर[1]भावत्वात् । अतः परिशेषात् उच्चारणोपलब्ध्योः अन्यतरगत[2]क्रमोपरक्ता वर्णा वेदः इति वाच्यम् । न च अन्यधर्मस्य क्रमस्य अन्यत्र साक्षादुपरागः सम्भवति । अतो मिथ्याभूतक्रमविशिष्टवर्णानां तदुपरक्तमिथ्या[3]रूपेणैव अर्थप्रतिपादकत्वं अनिच्छद्भिरप्यास्थेयम् । [4]क्रमपरम्परा वर्णानां पूर्वपूर्व[5]समानैव उत्तरोत्तरा प्रवर्तते इति प्रवाहरूपेण अनादित्वं वेदस्योच्यते । महाप्रलये तु रूप[6]प्रपञ्चवत् नामप्रपञ्चस्य शक्तिमात्रावशेषेऽपि पूर्वस्मिन् कल्पे यादृशक्रमविशिष्टा[7]नां वेदोप[8]लक्षितवर्णानां यादृग[9]र्थाभिधानसामर्थ्यं तादृशक्रमोपरक्तानां तादृग[10]र्थाभिधानसामर्थ्योपेतानामेव वर्णानां उत्तरकल्पेऽपि [[11]क्रमः इति अनादित्वेऽपि] प्र[12]थमं ब्रह्मचैतन्यविवर्तत्वात् न अनादित्वविरोधः, नाप्यर्थप्रतिपादकत्वहानिः । लौकिकवाक्ये तु प्रतिप्रयोगं वर्णानां व्यभिचरति क्रमः ; वेदवाक्ये तु सर्वदा एकरूप एव क्रम इति अनादित्वम् । अनादित्वेऽपि ब्रह्मचैतन्यविवर्ततया ब्रह्मपरतन्त्रो वेदः इति सर्वं सुव्यवदातम् ।

इति तत्त्वशुद्धौ वेदस्य ब्रह्मपरतन्त्रत्वनिरूपणप्रकरणम्

---

१. B: अपरीभाव

२. A E omit गत

३. E: मितिरूपेण

४. E: साचेयं क्रम

५. E has only one पूर्व

६. A E: रूपप्रपञ्चस्य and omit नामप्रपञ्चस्य

७. E: विशिष्टभूतानां

८. B: शब्दोपलक्षित ; A E: वेदलक्षेपलक्षित ; D: वेदशब्दोप

९. B: यादृशत्वाभिधानः, E: यादृशाभिधानः

१०. B: तादृशत्वाभिधान

११. B alone contains the part in brackets

१२. A E: प्रथमः

## ॥ प्रपञ्चमिथ्यात्वनिरूपणं विंशम् ॥

यदीयमायापरिकल्पितं जगत्
विभाति विश्वव्यवहारगोचरम् ।
स्वभावतः स्वप्न इवाप्रबोधतो
नमामि तं [१]द्वारवतीपतिं हरिम् ॥

अथेदा[२]नीं ‘आकाशादिप्रपञ्चः परमार्थः किं वा[३] मिथ्या ?’ इति विचार्यते । इह खलु केचित् अनाद्यविद्यापटलपिहितविवेकविज्ञाननयनाः तावत् आकाशादिप्रपञ्चः परमार्थः इति मन्यन्ते । तथा हि—प्रपञ्चप्रतीतेः आगोपालावि[४]पालपण्डितं प्रसिद्धत्वात्, प्रतीतेश्च वेदवादिमते स्वतःप्रामाण्यात्, कारणदोषबाधकप्रत्ययानुपलम्भाच्च न अप्रामाण्यकारणं [अ[५]स्ति । प्रमाण] गम्यत्वमेव हि पारमार्थिकत्वं नाम; तद्र[६]हितेषु शुक्तिकाकलधौतादिषु खर[७]विषाणादिषु च मिथ्या[८]त्वासत्त्वप्र[९]तीतेः । तथा सति अबाधितप्रतीतिगोचरतां आचरन् अयं आकाशादिप्रपञ्चः पारमार्थिक एव इति युक्तमाश्रयितुम्, मिथ्या[१०]त्वे प्रमाणानुपलम्भात् । यदि च मिथ्यैवायं द्वैतप्रपञ्चः, तथा हि[११] सति तद्विषयप्रत्यक्षादेः मृगतृष्णिकोदकविज्ञा[१२]नवत् अप्रामाण्यात्, तद्धेतुकसमस्तलौकिकव्यवहारः अस्तं गच्छेत् । पदपदार्थतत्सम्बन्धानां च प्रत्यक्षादिसमधिगतानां अली[१३]कत्वात् न शब्दात् काचित् पारमार्थिका[१४]र्थप्रतीतिः अवकल्पते ।

---

१. E: चारवती for द्वारवती
२. B omits इदानीं
३. E omits वा
४. A. आगोपालपण्डितं
५. E omits the portion within brackets
६. A E: तर्हि तेषु
७. B omits this; E: खरमापाणा
८. B: मिथ्यात्व
९. A E: प्रसिद्धेः
१०. B: मिथ्यात्वप्रमाण
११. B omits हि
१२. B omits विज्ञान
१३. A B D: अष्टिक, a corrupt text
१४. B omits अर्थ

ततश्च कर्मज्ञानकाण्डयोः अप्रामाण्यात् स्वर्गापवर्गार्थ[1]प्रवृत्त्यनुपपत्तेः लोकायतवाद-प्रसङ्गश्च मायावादिनाम्—इति ।

तत्रा[2]भिधीयते । इदं तावत् भवान् प्रष्टव्यः 'किं प्रपञ्चस्य [मिथ्या[3]त्वे प्रमाणपर्यनुयोगः क्रियते ? किं वा तदभ्युपगमे सति अनिष्टापादनम् ?' इति । यदि तावत् प्रमाणपर्यनुयोगः तर्हि त[4]त्राभिधीयते । "एकमेवाद्वितीयम्" (Ch. VI. 2. 1.) इत्यद्वितीयश्रुत्यन्यथानुपपत्तिः द्वैतप्रपञ्च-] मिथ्यात्वे प्रमाणम् । न हि [द्वैतप्रप[5]ञ्चे परमार्थभूते अवतिष्ठमाने सति 'एकमेवाद्वितीयम्' इत्युपपद्यते । ननु "यजमानः प्रस्तरः" इत्यादिवत् गुणवादेनाप्युपपद्यमाना अद्वितीयश्रुतिः न] द्वैतप्रपञ्चं बाधितुमुत्सहते । बाढम् ; अन्यपरा श्रुतिः प्रमाणान्तरविरोधे गुणवादे[6]नापि उपपद्यतेतराम्[7] । [8]अद्वितीयश्रुतिस्तु तत्परा लक्ष्यते, षड्विधलिङ्गोपेतत्वात् । तदुक्तम्—

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनि[9]श्चये ॥"

इति । इह च "एकमेवाद्वितीयम्" (Ch. VI. 2. 1.) इत्युपक्रम्य "ऐतदात्म्यमिदं सर्वं" (Ch. VI. 8. 7.) इत्युपसंहारात्, "ऐतदात्म्यमिदं सर्वम्, ऐतदात्म्यमिदं सर्वम्" इति च पुनः पुनरभ्यासात्, प्रमाणान्तरानधिगतस्य ऐकात्म्यस्य प्रतिपादनात्, "आचार्यवान् पुरुषो वेद" (Ch. VI. 14. 2.) "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" (Ch. VI. 14. 2.) इत्यैकात्म्यविज्ञाने मोक्षफल-

---

१. B omits अर्थ
२. A E: अत्र
३. E omits the portion within brackets
४. B: तदभि
५. E omits the part within brackets
६. A E: वादेनाभ्युपपद्यते न तत्परा etc.
७. A E: उपपद्यते न तत्परा, a manifest mistake
८. B: अद्वैतश्रुति
९. E: निर्णये

श्रवणात्, "येनाश्रुतं श्रुतं भवति" (Ch. VI. 1. 3.) इत्यादिना अर्थवादोपादानात्, मृदादिदृष्टान्तयुक्तिभिः ऐकात्म्यस्य[1] उपपादनात् षष्ठप्रपाठकस्य प्रत्यगद्वितीयब्रह्मपरता निश्चीयते। अतः[2] अनन्यपरत्वात् न अद्वितीयश्रुतिः गुणवादः।

ननु च[3] द्वैतप्रपञ्चस्य मिथ्यात्वे सति अबाधितद्वैतप्रतिभासोऽनुपपन्नः। नैतत्सारम्; द्वैताद्वैतप्रतिभासयोः परस्परविरोधे सति अबाधितान्यतरस्यापि[4] निरालम्बनत्वानुपपत्तेः, तत्परवाक्यस्य गुणवादेन प्रवृत्त्यसंभवाच्च परमार्थविषया अद्वितीयश्रुतिः, द्वैतप्रतिभासस्तु [कल्पितद्वैतविषयः[5], इति चन्द्रैकत्वद्वित्वविज्ञानयोरिव व्यवस्थोपपत्तेः] अद्वितीयप्रत्यगात्मज्ञानादेव द्वैतप्रपञ्चबाधात्, अबाधितप्रतीतिविषयत्वासिद्धेः, गमयत्येव अद्वितीयश्रुतिः द्वैतमिथ्यात्वं इति साम्प्रतम्। अनुमानमपि— विवादगोचरापन्नो गगनादिप्रपञ्चो[6] मिथ्या भवितुमर्हति; अचेतनत्वात्; यदचेतनं तत् मिथ्या दृष्टम्, यथा स्फटिकलौहित्यम्; तथा चायं प्रपञ्चः; तस्मात् तथा— इति। न च वाच्यं द्वैतप्रपञ्चस्य प्रत्यक्षसिद्धत्वात् कालात्ययापदिष्टो हेतुः इति, संप्रतिपन्नमिथ्याभूतगन्धर्वनगरादेरपि अपरोक्षप्रतिभासदर्शनात्[7]। अथ 'तत्र प्रत्यक्षेण अपरोक्षप्रतिभासस्यापि बाधात् उपपद्यते मिथ्यात्वम्; इह पुनः अनुमानेन अपरोक्षप्रतीतिबाधनमुच्यमानं अयुक्तं प्रतिभाति' इति। तदपि न युक्तम्, उष्णजलादेः देहात्मभावस्य च[8] प्रत्यक्षबाधाभावे[9][10] व्यवहाराविच्छेदेऽपि अनुमानादिबाधितस्य[11] मिथ्यात्वनिश्चयात्। इदमत्र विनिगमनकारणम् 'यदनुमानमबाधितप्रत्यक्षमूलं तत्परवेदवाक्यमूलं वा तत् अपरोक्षामपि[12] लौकिकप्रतीतिं शक्नोत्येव स्ववि-

---

१. E: ऐक्यस्य
२. E: अतो न च परत्वात्
३. E omits च
४. A E omit अबाधित
५. E introduces the portion within brackets after अनुमानमपि
६. E omits this word
७. B omits प्रतिभास
८. E omits च
९. E: प्रपञ्च
१०. E adds अपि
११. A E: बोधित
१२. A E: अपरोक्षरूपामपि

षयात् प्रच्यावयितुम् । यत्तु केवलसामान्यतो दृष्टम्—अग्निरनुष्णः—इत्यादि, तत् आभासत्वात् न अपरोक्षप्रतीतिविरोधे समुद्भवति' इति । अथोच्येत—बाध्यत्वात् स्फटिकलौहित्यादेः मिथ्यात्वम्, न अचेतनत्वात्, इत्यप्रयोजको हेतुः—इति । तत्र यदि बाधयोग्यत्वं बाध्यत्वं[1] तर्हि तत् इहापि मिथ्यात्वशब्देनैव[2] पक्षीकृतम् । अथ [3]उच्छिन्नव्यवहारत्वमेव बाध्यत्वं अभिप्रेतं[4], तदसत्, स्वव्यवहारसमयेऽपि तस्य मिथ्यात्वस्य संप्रतिपन्नत्वात् । तस्मात् भवत्येव अचेतनत्वमेव मिथ्यात्वे प्रयोजकम् । बाध्यता तु मिथ्यात्वे [सति[5] स्वत एव सिद्धा ।

ननु—इदमनुमानं प्रपञ्चान्तर्भूतं अनन्तर्भूतं वा? यद्यन्तर्भूतम्[6], तदा अस्य केन मिथ्यात्वसिद्धिः? न तावत् स्वयमेव स्वस्य मिथ्यात्व-]साधनम्, प्रमेयत्वेन साध्यत्वात् साधनत्वानुपपत्तेः । अन्येन चेत्, अनवस्थापातः[7] । अथ अनन्तर्भूतमिति प्रतिज्ञायेत, तदा अस्याचेतनस्याप्यमिथ्यात्वात् अनैकान्तिको हेतुः—इति । तदपि बालबिभीषिकामात्रम्, अनुमानस्य प्रपञ्चान्तर्भावेऽपि स्वयमेव स्वस्य मिथ्यात्वसिद्धेः । न च प्रमाणप्रमेयभावविरोधः[9], प्रपञ्चात्मना प्रमेयत्वे[8]ऽपि अनुमानात्मना[10] प्रमाणत्वोपपत्तेः । भवदीये [प्रपञ्चसत्यत्वसाधके[11]प्रमाणेऽपि[12] समानावेतौ[13] चोद्यपरिहारौ । ननु—प्रपञ्चमिथ्यात्वसाधको हेतुः मिथ्यात्वधर्मस्यापि मिथ्यात्वं साधयति न वा? साधयति चेत्, प्रपञ्चस्य सत्यत्वप्रसङ्गः, तस्मिन्[14] मिथ्यात्वस्य

---

१. E: बाधं
२. B omits स्व
३. E: अविच्छिन्न
४. B omits this word
५. E omits the portion within brackets
६. A: यदि तावदन्तर्भूतं
७. B: स्थातः
८. E: न्तर्भूतत्वे
९. A E: प्रमेयत्वविरोधः
१०. E: अनुमानप्रमाणत्वो
११. E omits the portion within brackets.
१२. B: साधकेऽपि
१३. A omits एतौ
१४. B: तन्मिथ्यात्वस्य मिथ्यात्वप्रसङ्गात्

मिथ्यात्वात्। ततश्च साध्यविपरीतसाधको हेतुः स्यात्। न[1]] साधयति चेत्[2], तदा तस्य सत्यत्वात् 'अचेतनत्वात्' इत्यनैकान्तिको हेतुः—इति। तदसत्, एकस्यापि दोषस्य अभावात्। न तावत् साध्यविपरीतसाधको हेतुः, स्वविषयमात्रस्य[3] साधनोपक्षीणतया अन्यस्य सत्यत्वमिथ्यात्वादिसाधकत्वाभावात्। नाप्यनैकान्तिकः[4], मिथ्यात्वधर्मस्यापि अनुमानान्तरेण मिथ्यात्वोपपत्तेः[5]। न च अनवस्था आशङ्कनीया[6], बुभुत्सापूर्वकत्वात् अनुमानप्रवृत्तेः। ननु तर्हि[7] विरुद्धाव्यभिचारी हेतुः। तथा हि–विवादगोचरापन्नः प्रपञ्चः परमार्थो भवितुमर्हति, बाधितमिथ्यात्वधर्मत्वात्[8], आत्मवत्[9][10]—इति। तदप्यपेशलम्[11], अस्य हेतोः अप्रयोजकत्वात्, चेतनत्वादेव हि सत्यत्वं आत्मनः, न बाधितमिथ्यात्वधर्मत्वात्, इति। एतेन अचेतनत्वधर्मस्यापि[12] सत्यत्वमिथ्यात्वविकल्पदूषणानि निरस्तानि वेदितव्यानि।

स्यादेतत्—स्फटिकात्मना लौहित्यस्य मिथ्यात्वेऽपि स्वरूपेण तस्य सत्यत्वं दृष्टम्। तथा प्रपञ्चस्य आत्मना मिथ्यात्वे[13]ऽपि स्वरूपेण सत्यत्वं वक्तव्यम्—इति। नैतत्सारम्। स्फटिकलौहित्यादेः स्वरूपेण [[14]मिथ्यात्वं उत अन्यात्मना] मिथ्यात्वं[15] इत्यादिमिथ्यात्वप्रकारविप्रतिपत्तावपि स्फटिकलौहित्ये तावत् मिथ्याशब्द[16]प्रत्ययौ निखिलजनसिद्धौ। अतस्तस्य मिथ्यात्वं अचेतनत्वव्याप्तम्[17]। तावता

---

१. A: अथ न मिथ्यात्वधर्मस्य मिथ्यात्वं साधयति
२. E drops चेत्
३. B: मात्रोपक्षीणतया
४. A E: न्तिकम्
५. A E: मिथ्यात्वसिद्धेः
६. B E: विशङ्क
७. A E omit तर्हि
८. B: बाधक
९. E: मिथ्यात्वात्
१०. B omits आत्मवत्
११. B omits this part up to एतेन अचेतनत्वधर्मस्यापि
१२. E: चेतन
१३. A: सत्यपि
१४. E omits the part within brackets
१५. B omits मिथ्यात्वं
१६. B: मिथ्याशब्दप्रत्ययो निखिलजनसिद्धः
१७. E: मिथ्यात्वचेतनत्वेन व्याप्तम्

दृष्टान्तसिद्धिः[1] । स्वरूपेण सत्यत्वं उत अन्यात्मना इत्येतत्[1a] प्रमेयान्तरम् । तस्मात् निरवद्यमिदमनुमानम् । श्रुतिश्च—“मायां तु प्रकृतिं विद्यात्” (Śvet. 4. 10) “इन्द्रो मायाभिः पुरुरूपः” (Bṛh. II. 5. 19) इत्याद्या जगत्प्रकृतेः मायात्वाभिधानेन जगतो मिथ्यात्वं आचष्टे । “यत्र हि द्वैतमिव भवति” (Bṛh. II. 4. 14) “य इह नानेव पश्यति” (Bṛh. IV. 4. 19) इत्यादि च[2] वाक्यं उपमार्थासंभवात् इवशब्देन[3] द्वैतप्रपञ्चस्य आभासतां आवेदयति । तथा “वाचारंभणं विकारो नामधेयम्” (Ch. VI. 1. 4) इति च विकारजातस्य असत्यतामाह । तस्मात् श्रुतेरपि द्वैतप्रपञ्चस्य मिथ्यात्वसिद्धिः ।

अपि च प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमेव मिथ्यात्वम् । तदिह घटादेः अस्तीति प्रतिपन्नस्य[4] तदुपाधावेव पुनः नास्तीति प्रतिषेधो दृश्यते, यथा[5] ‘इदं रजतम्’ इति प्रतिपन्नस्य तदुपाधावेव ‘नेदं रजतम्’ इति निषेधः । ननु—विषमो दृष्टान्तः; यद्देशकालयोः इदं रजतं इति प्रतिपन्नं तद्देशकालयोरेव तस्य नेदं रजतमिति प्रतिषेधः; घटादेः पुनः यद्देशकालयोः ‘अस्ति’ इति सत्त्वप्रतीतिः न तद्देशकालयोरेव ‘नास्ति’ इत्यसत्त्वप्रतीतिः, अपि तु देशकालान्तरयोः—इति । तदपि नातिचतुरश्रम; देशकालयोः देशकालान्तराभावात् ‘अस्ति’ इति प्रतिपन्नयोः तदुपाधावेव ‘नास्ति’ इति [निषेधसिद्धेः[6], मिथ्यात्वम्; तन्मिथ्यात्वे[7] च ताभ्यां पदार्थव्यवस्थानुपपत्तेः सर्वस्य निरुपाधिक-]निषेधसिद्धिः । न च वाच्यम्—सामान्यविशेषभावेन सर्वस्य ‘अस्ति, नास्ति’ इति प्रत्यया-

१. E: असिद्धिः

१a. E· वेति ; and omits एतत् and reads प्रमेया dropping अन्तरं

२. B omits च

३. E: इवशब्दे

४. E omits this word, the omission indicated by dots

५. B: अथ

६. E omits the portion within brackets

७. B omits तत्

लंबनत्वसंभवात् न निरुपाधिकनिषेधः—इति ; व्यक्त्युपाधावेव उभयप्रतीतिदर्श-नात् । तस्मात्[१] प्रपञ्चस्य [[२]मिथ्यात्वसिद्धिः ।

यत्तूक्तम्—[३]प्रपञ्चस्य] मिथ्यात्वे सति लौकिकवैदिकज्ञानानां अप्रामाण्य-प्रसङ्गः—इति, तदपि यथाजातजनोपच्छन्दनमात्रम् , प्रसङ्गाभावात् । तथा हि—तत्र ' किं तत्त्वावेदकप्रामाण्यहानिः, आहोस्वित् व्यवहाराङ्गतालक्षणप्रामाण्यहानिः ?' इति वक्तव्यम् । पूर्वस्मिन् अस्मदिष्टमेव चेष्टितं भवतापि इति न अस्माकमनिष्टापत्तिः । उत्तरस्मिन् उष्णजलादि[४]विज्ञानस्य देहात्मप्रतीतेश्च अयथार्थत्वे[५]ऽपि व्यवहार-कारणत्वदर्शनात् स्वप्नविज्ञानस्येव आ प्रबोधात् प्रपञ्चस्य मिथ्यात्वे[६]ऽपि तद्विषयज्ञानस्य आ परमार्थतत्त्व[७]बोधात् व्यवहाराङ्गत्वोपपत्तेः सकललौकिकवैदिकव्यवहारोपपत्तिः । अतो न अनिष्टापत्तिः इति सर्वमनवद्यम् ।

इति तत्त्वशुद्धौ प्रपञ्चमिथ्यात्वनिरूपणप्रकरणम्

---

१. B: तस्मात् न प्रत्यक्षेणापि द्वैतप्रपञ्चस्य मिथ्यात्यसिद्धिः

२. E omits the part within brackets

३. B: द्वैतप्रपञ्चस्य

४. B omits आदि

५. E: यथार्थ

६. B: प्रपञ्चविषयविज्ञानस्य, thus dropping a few letters in the middle

७. B: अपरमार्थकत्व ; E: परमार्थत्व

## तत्त्वावेदकप्रामाण्यनिरूपणं एकविंशम् ।

यत्तत्त्वप्रतिपादकश्रुतिवचो मानं विदुः पण्डिताः
तत्त्वावेदकमन्यदाहुरखिलं मिथ्यार्थनिष्ठं ततः ।
तत्साक्षादपरोक्षमव्ययमजं सर्वात्मकं सर्वगं
वन्दे विश्वविवर्तहेतुभमलं ज्योतिः पदं वैष्णवम् ॥

संप्रति विचार्यते—किं समस्तं प्रमाणं तत्त्वावेदकम्, आहोस्वित् द्वैताद्वैतविज्ञानयोः तत्त्वातत्त्वावेदकभावेन व्यवस्था ?—इति । तत्र[1] केचित् आचक्षते—सर्वं[2] प्रमाणं तत्त्वावेदकमेव युक्तम्, प्रमाणत्वाविशेषात्; प्रमाणं अतत्त्वावेदकमिति विप्रतिषेधाच्च । अथापि स्यात्—द्वैताद्वैतविज्ञानयोः परस्परविरोधात्, वस्तुनि च[3] विकल्पासंभवात्, अन्यतरस्यापि निरालम्बनत्वानुपपत्तेः इत्थं व्यवस्था–इति, तदपि न प्रमितिपथम[4]ध्यास्ते, विरोधाभावात् । तथा हि—प्रत्यक्षादिविरोधात् आगमस्य मुख्यार्थासंभवे सति गुणवादेनैव प्रवृत्तिर्युक्ता, न प्रत्यक्षाद्युपमर्दकत्वम् । तदुक्तम्—'गुणाद्वाप्यभिधानं स्यात् सम्बन्धस्याशास्त्रहेतुत्वात्' (P. M, III, ii, 4) इति । कस्तर्हि निगमनहेतुः ? किं आगमविरोधात् प्रत्यक्षं अतत्त्वावेदकं कल्प्यताम्, किं वा प्रत्यक्षविरोधात् आगमस्य प्रवृत्त्यन्तरं वा ? इति । सोऽभिधीयते । प्रत्यक्षविरोधे दुर्बलत्वात्[5] आगमस्यैव प्रवृत्त्यन्तरकल्पनं युक्तम् । तथा हि—प्रथमप्रमाणत्वात्, प्रत्ययान्तरनिरपेक्षत्वात्, अखिलजनसंप्रतिपन्नत्वात्, अनन्यथासिद्धत्वात्, अव्याकुलत्वात्, व्यवहारा[6]विसंवादाच्च प्रत्यक्षं तावत् प्रमाणम् । तद्विरोधे सति आगमस्य चरम[7]प्रमाणत्वात्, पदपदार्थतत्सम्बन्धज्ञानस्य[8] प्रत्यक्षसव्यपेक्षत्वात्, क्वचित्

---

१. E: अत्र
२. E: प्रमाणत्वावेदक
३. B omits च
४. B: प्रतीतिपद्धतिं
५. B: स्वबल ; E: दुश्चल
६. B: हारासंवादाच्च
७. E omits चरम
८. B: सम्बन्धविषयप्रत्यक्षादिसव्यपेक्षत्वात्
E: सम्बन्धविषयप्रत्यक्षसव्यपेक्षत्वात्

केश्चित्[1] आगमप्रामाण्ये[2] विप्रतिपन्नत्वात्[3], गुणवादेनापि सावकाशत्वात्, कर्मज्ञान-[4] भागयोः आगमस्य द्वैताद्वैतविषययोः[5] परस्परस्पर्धितया सव्याकुलत्वात, अद्वैतविज्ञानस्य व्यवहारविसंवादाच्च दौर्बल्यम्। ततश्च विरोधे सति आगमस्यैव प्रवृत्त्यन्तरकल्पना[6] युक्ता--इति। यदि च अद्वैतश्रुतेः मुख्यार्थमभ्युपगम्येत, तदा अद्वैतविज्ञानेन प्रत्यक्षादिप्रसिद्धद्वैतप्रपञ्चबाधः[7][8] स्यात्। न च प्रमाणप्रतिपन्नस्य[9] बाधो युक्तः, आगमप्रमाणसंसिद्धाद्वैतात्मतत्त्वे[10] अनभ्युपगमात्। नापि बाध्यविषयज्ञानस्य प्रामाण्यं युक्तम्, शुक्तिकाकलधौतादिषु अदर्शनात्। तस्मात् प्रत्यक्षादि च[11] प्रमाणं चेत् अभ्युपगतम्, तर्हि सर्वं प्रमाणं तत्त्वावेदकमेवेति समाश्रयणीयम्--इति।

तत्राभिधीयते। स्यादेतदेवं यद्यविशिष्टं असंभावितदोषकारणजन्यत्वं प्रत्यक्षागमयोः स्यात्। न त्वेतदस्ति। तथा हि---अर्थेन्द्रियसंप्रयोगजन्यविज्ञानं प्रत्यक्षमुच्यते। तत्तु क्वचित् विषयदोषात् दुष्यति, यथोच्चतरगिरिशिखरवर्तिषु महातरुषु बहुषु[12] भूमिष्ठस्य दवीये अवस्थानदोषात् एकत्वाल्पत्वप्रतीतिः[13]; क्वचिच्च अदृष्टादिदोषरूषितान्तःकरणवैकल्यात्, यथा मार्तण्डमण्डलसुषिरादिविज्ञानम्, यथा वा गन्धर्वनगरादिप्रतिभासः। अतः संभावितदोषकारणं तावत् प्रत्यक्षम्। शब्दस्य तु स्वतो दोषवत्त्वकल्पनायां तज्जनितविज्ञानस्य सर्वस्य अप्रामाण्यप्रसङ्गात्, वेदवाक्यस्य पुरुषसम्बन्धनिमित्तदोषाभावाच्च असंभावितदोषकारणजन्यमेव वैदिकविज्ञानम्। अतः[14] प्रत्यक्षात् आगमो बलवान्। इन्दुमण्डलभेदप्रतिभासादिवत्[15] एकत्वानुमानम्।

---

१. E: केचित्
२. B E add अपि
३. E omits वि
४. B drops कर्म
५. E: द्वैताद्वैतयोः
६. B omits प्र
७. B omits प्र
८. B: बाधा
९. B E omit प्रमाण and E reads संप्रतिपन्नस्य
१०. E: संबन्ध
११. B omits च
१२. B omits बहुषु
१३. E: एकत्वाल्लक्ष्य
१४. B: पुनः
१५. B: भासादिवैकत्वा ; E: भासादिव तदेकत्वा

यदुक्तम्—प्रथमप्रमाणत्वात् प्रत्यक्षं बलीयः—इति, तदसिद्धम्। न हि प्रथमचरमभावः प्रमाणानां स्वं स्वमर्थं[1] साधयतां उपलभ्यते, संभवति वा। तत्संभवे सति आगमस्यैव प्राथम्यम्, अनादिसिद्धत्वात्, तत्पूर्वकत्वाच्च सर्वजगत्प्रभवस्य।

यदप्युक्तम् 'आगमविज्ञानं प्रत्यक्षसव्यपेक्षम्' इति, तत्र वक्तव्यम् 'किं उत्पत्तौ सापेक्षत्वम्[2], आहोस्वित् प्रमितौ?' इति। यदि तावदुत्पत्तौ, न तत् दौर्बल्यकारणम्, शुक्तिकारजतप्रतिभासस्य इन्द्रियदोषानुमानहेतुत्वेऽपि तदपेक्षया अनुमानस्य दौर्बल्यादर्शनात्।

अथ प्रमितौ[3]वपेक्षा इति, तदपि न पण्डितहृदय[4]पुण्डरीकमधिरोढुमर्हति, सर्वप्रमाणानामपि स्वतःप्रामाण्येन प्रमितौ[5]वनपेक्षत्वात्।

यदपीदमवादि—सकलजनसंप्रतिपन्नत्वात् प्रत्यक्षस्य बलीयस्त्वम्—इति, तदपि न मनोहरम्, देहात्मभावप्रतिभासस्य सकल[6]जनसंसिद्धस्यापि आगमादनुमानाद्वा बाधदर्शनात्। अथ तत् विवेकिनां अप्र[7]सिद्धं इत्युच्येत, तर्हि इहापि ब्रह्मविदां अप्रसिद्ध[8]मेव द्वैतप्रतिभासस्य प्रामाण्यं इति समानश्चर्चः।

यदपीदमुक्तम्—आगमस्य सावकाशत्वात् निरवकाशं प्रत्यक्षं बलीयः—इति, तदपि न साधु भाषितम्[9], अद्वितीयागमस्यैव [निरव[10]काशत्वात्। न ह्यद्वितीयागमस्य गुणवादेन अन्यशेषत्वसमा[11]श्रयणं युक्तम्[12], अनन्यपरत्वावगमात्। अतः व्यवहारातीतवस्तुविषयाद्वैतश्रुतिः यदि तत्त्वावेदकप्रामाण्यमपि न लभेत, तदा]

---

१. A E: प्रसाधयतां
२. B: सापेक्षं
३. B: प्रमितौ, तदपि
४. B: हृत्पुण्ड
५. B: प्रतीता
६. A E: सकलसिद्धस्यापि
७. B: असिद्धं
८. A: असिद्ध
९. B omits भाषितम्
१०. E drops the portion within brackets
११. B omits समाश्रयणं
१२. A omits युक्तम्

भावे ज्ञानकारणादेव प्रमाण्यजन्म इति व्यवस्थानुपपत्तेः । ननु अर्थापत्त्या शक्तिं अवगच्छामः । तथा हि—अ[1]ग्न्यङ्गुलिसंयोगस[2]मनन्तरमेव स्फोटादिकार्यं उदयमासादयत् दृश्यते । क्वचिच्च[3] मणिमन्त्रा[4]दिप्रतिबन्धे सति अङ्गुलिसंयोगेऽपि नोत्पद्यते । अतोऽ[5]वगम्यते स्वरूपसहकारिव्यतिरिक्ता पावके कार्यजननशक्तिरस्तीति । तदेतदसांप्रतम्, अर्थापत्तेः अन्यथासिद्धत्वात् । या[6] खलु अङ्गुलिसंयोगे सत्यपि कार्यानुत्पत्तिः सा प्रतिब[7]न्धकाभावादपि उपपद्यमाना न स्वरूपातिरिक्तां शक्तिं कल्पयति । शक्तिवादिनोऽपि प्रतिबन्धकाभावे सत्येव कार्योदयः संप्रतिपन्नः । ततः] तद्भावे सति कारणपौष्कल्यात् कार्यमुत्पद्यते, तदभावे तु कारणवैकल्यादेव नोत्पद्यते इति न शक्तिकल्पनावकाशः ।

स्यादेतत्—[8]उत्तंभकमणिसमवधाने सति प्रतिबन्धकम[9]णिसन्निधानेऽपि कार्यदर्शनात् न प्रतिबन्धकाभावः कारणम्—इति । त[10]दप्यसत्, प्रतिबन्ध[11]कमणेरपि अप्रतिबन्धकस्यैव प्रतिबन्धकत्वात् । तथा तृतीयचतुर्थमणेरपि [12]इति न कदाचित् प्रतिबन्धकाभावस्य कार्यव्यभिचारः ।

अपि च शक्तिप्रतिबन्धो नाम किं शक्तेः स्वरूपनाशः, किं वा तद्गतसामर्थ्यप्रतिबन्धः? यदि स्वरूपनाशः तदा[13] [[14]प्रतिबन्धकाभावेऽपि न स्यात् कार्यम्, विनष्टशक्तित्वात् कारणस्य । अथ] प्रतिबन्धकाभावे सति शक्त्यन्तरमुत्पद्येत, तदापि वक्तव्यम् 'किं शक्त्यन्तरं प्रति कारणं शक्तं अशक्तं वा?' । शक्तं चेत्,

---

१. A E omit अग्नि
२. A omits समनन्तरं
३. A omits च
४. B: मन्त्रौषधादि
५. A omits अतोऽवगम्यते
६. B: यथा खलु
७. A: बन्धकभावा
८. B: उक्तं भवति for उत्तंभक
९. E omits मणि
१०. E omits तदप्यसत्
११. B: प्रतिबद्धमणेरप्यप्रतिबद्धस्यैव
१२. E omits इति
१३. E: तदापि
१४. E omits the portion within brackets.

सर्वदा तस्य भावात् कार्यमपि सर्वदैव [1]समुत्पद्येत । अथ अशक्तम्, तर्हि [2]कस्मात् शक्त्यन्तरमुत्पद्येत ? अथ शक्तिप्रतिबन्धो नाम तच्छक्तिप्रतिबन्धः, तदा [3]तस्या अप्येवम्, तस्या अप्येवम्, इत्यनवस्था दुरवस्था स्यात् । [4]तस्मात् स्वरूपसह[5]कारिव्यतिरेकेण शक्तिस[6]द्भावे प्रमाणाभावात्, तस्याः प्रतिबन्धासंभवाच्च ज्ञानकारणादेव प्रामाण्यजन्म, तस्य काचादिकारणान्तरसंपर्के सति अप्रामाण्यजन्म इति व्यवस्था निर्निमित्तैव । तस्मात् यथा कारणदोषात् अप्रामाण्यजन्म [[7]एवं कारणगुणादेव प्रामाण्यजन्म] इति युक्तं परतः प्रामाण्यम् । अत्र अनुमानप्रयोगश्च भवति- विवादगोचरापन्नं प्रमाण्यं [8]ज्ञानकारणतिरिक्तकारणजन्यं भवितुमर्हति, ज्ञानस्वरूपव्यभिचारिधर्मत्वात्, यदित्थं तत्तथा यथेदमप्रामाण्यम्, तथा [9]चेदम्, तस्मात्तथा—इति । तथा च प्रामाण्यं ज्ञानकारणातिरिक्तकारणजन्यम्, ज्ञानकारणमात्रादसंभाव्यमानजन्मत्वात्, यदुक्तसाधनं तदुक्तसाध्यम्, यथेदमप्रामाण्यम्, तथा [10]चेदमुक्तसाधनम्, तस्मात्तथा— इति । तस्मात् [11]ज्ञानानां अप्रामाण्यं प्रमाण्यं चोभयं परतः इति नैयायिकवैशेषिकौ मन्वाते ।

सौगतास्तु सङ्गिरन्ते—शुक्तिकारजतादि[12]विज्ञानानां [[13]अर्थक्रियाविसंवादे सति स्वत एव अप्रामाण्यदर्शनात् एतत्संवादे सति घटादिविज्ञानानां प्रामाण्यदर्शनात्] अन्वयव्यतिरेकावष्टंभेन परत एव अर्थक्रिया[14]संवादात् प्रमाण्यम्—इति ।

अत्राभिधीयते । प्रामाण्यं धर्मिज्ञानसत्ताप्रतीतिकारणादेव सत्ताप्रतीतिकार-

---

१. E omits सं
२. B: तस्मात्
३. B has only one तस्या अप्येवं
४. A E omit तस्मात्
५. A E: कार
६. E: संभवे
७. E omits the part within brackets
८. E: ज्ञानातिरिक्तकारणजन्यं
९. B: चेदं प्रकृतं
१०. A E omit उक्तसाधनं तस्मात्तथेति
११. A E: ज्ञानं प्रामाण्यं चोभयं
१२. B omits वि
१३. A omits the portion within brackets.
१४. E: अविसंवाद

णवत् भवितुमर्हति, अनुपलभ्यमानतदतिरिक्तकारणत्वे सति कार्यत्वात्[१], ज्ञानस्वरूपवत् । न चायं विशेषणासिद्धो हेतुः, ज्ञानकारणातिरेकेण प्रामाण्यं प्रति कारणानिरूपणात् । स्यादेतत्—आलोकादिसहकृतं चक्षुराद्येव ज्ञानस्वरूप[२]कारणम्; तद्गतगुणः अञ्जनादिः प्रामाण्यकारणम्—इति । तदेतत् असांप्रतम्, अञ्जनादिगुणवतोऽपि पुंसो भ्रान्तिज्ञानस्य सुलभत्वात्[३] । न दृष्टोऽञ्जनादिः तावत् प्रामाण्यकारणम् । नाप्यदृश्यमानगुणविशेषकल्पनायां [४]प्रामाण्यमस्ति, स्वत एव चक्षुरादेः अप्रतिबन्धात् प्रामाण्यजन्मोपपत्तेः । न च वाच्यम्—[[५]चक्षुरादेः स्वभावतः प्रामाण्यहेतुत्वनियमे सति ततोऽप्रामाण्यजन्म न भवेत्; दृश्यते च तत एव अप्रामाण्यमपि क्वचित् जायमानम्—इति; चक्षुरादेः सहकारिविशेषादेव कार्यविशेषहेतुत्वोपपत्तेः । तथा हि—दोष[६]विशेषदूषितं चक्षुरादि तदनुसारेण अप्रामाण्यज्ञानकारणम्; स्वतस्तु प्रमाणज्ञानकारणमेव इत्युक्तोत्तरमेतत् ।

यत्पु[७]नरुक्तम्—ज्ञानकारणातिरिक्तकारणजन्यं प्रामाण्यम्, प्रामाण्याप्रामाण्ययोः अन्यतरत्वात्—इति, तदेतत् बालिशभाषितं प्रतिभाति, तादृशोदाहरणस्य सर्वत्र सौलभ्यात् । तथा हि—प्रामाण्यं धर्मि[८]ज्ञानकारणादेव सत्ताप्रतीतिकारणवत् भवितुमर्हति, ज्ञानतत्प्रामाण्ययोरन्यतरत्वात, ज्ञानवत्—इति । अतो विरुद्धाव्यभिचारी भव[९]ति भवदुक्तो हेतुः ।

यत्पुनरुक्तम्—स्वरूपसहकारिव्यतिरिक्त[१०]शक्तिसद्भावे प्रमाणाभावात्, अर्थापत्तेश्च प्रतिबन्धकाभावविषयतया अन्यथासिद्धत्वात्, चक्षुरादेः स्वभावतः प्रामाण्यहेतुत्वम्, प्रतिबन्धकशक्तेस्तु तस्य] अप्रामाण्यहेतुत्वं इति व्यवस्था अनुपपन्ना—

---

१. E omits त्वात्
२. B: स्वरूपमात्र
३. B: सुलभमुपलभ्यमानत्वात्
४. E: प्रमाण
५. E omits the part within brackets.
६. A omits विशेष
७. B: तत्र यदुक्तं
८. B: प्रामाण्यं ज्ञानसत्ताप्रतीतिकारणादेव
९. A omits भवति
१०. A omits शक्तिसद्भावे

इति, अत्रोच्यते[1]। स्फोटादिकार्यानुपपत्तिरेव वह्निस्वरूपातिरिक्तां शक्तिं कल्पयति। अन्यूनानतिरिक्तवह्निस्वरूपे सकलदृष्ट[2]सहकारिसमवधाने[3] सत्यपि कदाचित् कार्यानुदर्य[4]दर्शनात्, नूनं वह्निस्वरूपातिरेकेण तद्गता अतीन्द्रिया शक्तिरस्ति, सा च कदाचित् प्रतिबद्धा, इति निश्चीयते। न हि प्रतिबन्धकाभावस्य कारणत्वं अवकल्पते, असतः[5] अर्थक्रियानुपपत्तेः। अपि च न तावत् प्रतिबन्धकप्रागभावः स्फोटादिहेतुः, प्रतिबन्धकसद्भावोत्तरकालमपि कार्यदर्शनात्[6]। नापि प्रतिबन्धकप्रध्वंसः, ततः प्रागपि[7] कार्योपलंभात्। नापि प्रतिबन्धकसंसर्गाभावः, अभूतप्रतिबन्धकस्यापि कार्यस्य दृश्यमानत्वात्। सतो हि संसर्गाभावाभावौ[8]; न असतः, नापि सदसतोः। अथ इतरेतराभावः, तर्हि[9] तस्य सर्वदा सद्भावात् सदा कार्यजननप्रसङ्गः।

अपि च अभावस्य[10] कारणत्वेऽपि न अकिञ्चित्करस्य कारणत्वं उपपद्यते, सर्वदा सर्वान्[11] प्रति कारणत्वप्रसङ्गात्। न च अभावस्य किञ्चित्करत्वमस्ति, विशेषासंभवात्। तथा हि—अभावेऽपि विशेषश्चेत् इष्येत 'सोऽप्यभाव एव उत भावः?' इति विवेक्तव्यम्[12]। न तावदभावः, स्वरूपविशेषानिरूपणात्, अनवस्थापाताच्च। अथ भाव एव अभावविशेषः, सोऽपि न जाघटीति, भावस्य अभावाश्रयत्वानुपपत्तेः। तस्मात् कुण्ठ[13]कुठारादेः अकारकत्वदशातः कारकत्वदशायां अतिशयदर्शनात् वह्नेरपि कार्यदशायां अतिशयः अवगम्यते, सहकारिसालक्षण्यलक्षणः प्रतिबन्धशक्तित्वलक्षणो वा। तदयं प्रयोगः—विवादगोचरापन्नो वह्निः अजनकावस्थातो[14] जनकावस्थायां अतिशयवान् इति साध्यो धर्मः, कारकत्वात्, कुठारादिवत्—इति[15]। न च वह्नेः प्रतिबन्धकाभावसमवधानेन सिद्धसाधनता हेतोः

---

१. B: तत्र
२. A omits दृष्ट
३. B: समवसाने
४. A E: कार्यादर्शनात्
५. A E: अतो for असतो
६. E: दर्शनादप्रतिबन्धध्वंसः
७. E: प्रागभावि, perhaps for प्रागभावि
८. E: संसर्गाभावेन सतोरथ etc.
९. E omits तर्हि
१०. A: भावस्य
११. E: सर्वस्मात् प्रति कारणत्वम्।
१२. B: वक्तव्यम्
१३. B omits कुण्ठ
१४. E omits अजनकावस्थातो
१५. A E omit इति

आशङ्कनीया, वह्नेः पूर्वापरकालयोः अप्रतिबन्धकतया[1] एकरूपस्य दृश्यमानत्वात् । अथ तस्य अतीन्द्रियरूपं प्रतिबन्धः[2] परिकल्प्येत, शक्तिरेव शब्दान्तरेण तर्हि भवतैवाश्रिता स्यात् ।

यदपीदमुक्तम्—शक्तिप्रतिबन्धो नाम तस्याः स्वरूपनाशः, किं वा तच्छक्तिप्रतिबन्धः[3] ?—इत्यादि, सोऽप्यनवसरदुष्टो विकल्पः । शक्तेः अतीन्द्रियत्वात् तदभिभवस्यापि तादृशत्वात् न तदुपालंभावकाशः, केवलकार्यकल्प्यत्वात्[4] । प्रत्युत भवन्त एव उपालंभार्हाः-वह्निस्वरूपस्य अन्यूनानतिरिक्तस्य उपलंभात्, अतीन्द्रियस्य कस्यचित् प्रतिबन्धानभ्युपगमात्, अभ्युपगमे च अपसिद्धान्तकान्तारपरिभ्रमणसंजातसंत्रास[5]प्रसङ्गात्, कः[6] प्रतिबन्धशब्दार्थः ?-इति ।

यदपीदमुक्तम्—ज्ञानकारणातिरिक्तकारणजन्यं प्रामाण्यम्, ज्ञानकारणात् असंभाव्यमानजन्मत्वात्—इति, तदपि चक्षुरादेः स्वभावत एव प्रमाणज्ञानकारणत्वस्य उपपादितत्वात् असिद्धम् ।

यदपीदमवादि—ज्ञानकारणातिरिक्तकारणजन्यं प्रामाण्यम्, ज्ञानव्यभिचारिधर्मत्वात्[7], अप्रामाण्यवत्—इति, तत्रेदमनुमानं किं स्वत एव प्रमाणम्, आहोस्वित् न, इति वक्तव्यम् । यद्याद्यः कल्पः, तदा अनैकान्तिको हेतुः । अथ अस्यापि परतः प्रामाण्यम्, तर्हि अस्य केन प्रामाण्यमवगम्यते[8] ? ज्ञानान्तरेण चेत्, तस्याप्यन्येन तस्याप्यन्येनेति[9] अनवस्थानात् न कस्यचिदपि ज्ञानस्य प्रामाण्यावगमः । अतोऽस्याप्यनुमानस्य प्रामाण्यासंभवात् न साध्यार्थसिद्धिः[10] । तस्मात् न कारणगुणज्ञानात् प्रामाण्यावगमः । अत एव न कारणगुणात् प्रामाण्यजन्म, नापि अर्थक्रियासंवादात् प्रामाण्यसंभवः[11], तत्राप्यनवस्थापातस्य तुल्यत्वात् । तस्मात् स्वत एव प्रामाण्यं, परतोऽप्रामाण्यं इति सिद्धम् ।

इति तत्त्वशुद्धौ स्वतःप्रामाण्यनिरूपणप्रकरणम् ।

---

१. B: बद्धतया, E: बन्धकरूपस्य
२. B: बद्धम्
३. A: बन्धक
४. A: केवलकार्यस्य कल्प्यत्वात्
५. B: संताप
६. E omits कः
७. B: धर्मित्वा
८. E omits अव
९. B has only one तस्याप्यन्येन
१०. B: संभवः for सिद्धिः
११. A: प्रामाण्यासंभवः

## ॥ अनिर्वचनीयख्यातिनिरूपणं त्रयोविंशः ॥

यन्मायामाहुरेके चिरतरसुदृढभ्रान्तितो ख्याति[1]मन्ये
भ्राम्यन्तोऽध्यासमेके न च किमपि बहिर्धी[2]मयं किन्तु सर्वम् ।
इत्यात्मख्यातिमन्ये न खलु बहिरिदं नान्तरं चेति शून्यं
मन्यन्ते तं मुरारिं परममृतमजं शाश्वतं नौमि शश्वत् ॥

संप्रति विचार्यते 'किं भ्रान्तिः अख्यातिः आहोस्वित् अनिर्वचनीयख्यातिः?' इति । इह खलु तावत् अख्यातिवादिनो मन्यन्ते । न तावत् अनिर्वचनीयस्य प्रतीतिरवकल्पते, तस्य सत्तानभ्युपगमात् ; न ह्यसतो गगनकुसुमादेः हानादिव्यवहारविषयतया प्रतीतिगोचरता दृष्टा । ननु अनिर्वचनीयस्य सत्ता[3]भावेऽपि तुच्छतानङ्गीकरणात् उपपन्ना प्रतीतिः । नैतत्सारम् । भवतामपि सद्विलक्षणत्वस्य गगनकुसुमादौ तुच्छत्वेन व्याप्तत्वात्, तुच्छविलक्षण[4]त्वस्य च आत्मादौ सत्त्वेन व्याप्तत्वात्, न उभयस्वभावविलक्षणत्वं एकस्य संभवेत् । अपि च अनिर्वचनीये रजतादिशब्दप्रवृत्तिनिमित्तं वक्तव्यम् । न तावत् सामान्यं, अनिर्वचनीयस्य रजतादिसामान्यं प्रति व्यक्तित्वानभ्युपगमात् ; अभ्युपगमे च सत्यत्वप्रसङ्गात् । नाप्यक्षा[5]दिशब्दवत् अनिर्वचनीयेऽपि[6] रजतादिशब्दस्य रूढिः संभवति, तत्र सम्बन्धग्रहणानुपपत्तेः । न च श्रोतुः[7] व्यवहारमन्तरेण व्युत्पत्तुः सम्बन्धग्रहणमवकल्पते । न खलु स्वभ्रान्तिसिद्धेऽर्थे अन्यस्य श्रोतुः व्यवहार उपपद्यते । न च अन्येषामपि भ्रान्ति[8]निमित्तावेव तत्र प्रयोगप्रत्ययौ[9] इति शङ्कनीयम्, तेषामपि अन्यत्रैव सम्बन्धग्रहण[10]मन्तरेण अकस्मादेव तत्र प्रयोग

---

१. All mss. except B give ख्यान
२. E: धियः
३. A: सत्त्वाभावेऽपि
४. B: विलक्षणस्य
५. B: नाक्षादि
६. A E omit अपि
७. A E: श्रोतृ
८. A E omit भ्रान्ति
९. B: शब्दप्रत्ययौ
१०. E: ग्रहणाकस्मा

[1]प्रत्ययानुपपत्तेः। न च पाचकादिशब्दवत् औपाधिकः अनिर्वचनीये रजतादिशब्दः, [2]अखण्डशब्दत्वात्, उपाधेरनिरूपणाच्च। उपाध्यनवगमे च औपाधिकशब्दस्य[3] अप्रवृत्तेः। तस्मात् अनिर्वचनीये रजतादिशब्दानुरोधेन प्रवृत्तिरनुपपन्ना[4]। अपि च अनिर्वचनीयस्य प्रतीतिकारणमपि न संभवति। न च वाच्यम्—दोषसंस्कारसहितेन्द्रियसंप्रयोग एव तत्प्रतीतिकारणम्—इति; दोषस्य कार्यविशेषं प्रति कारणशक्ति[5]प्रतिबन्धकतया स्वयमकारणत्वात्; [6]संप्रयोगसंस्कारयोः [7]संभूय प्रत्यभिज्ञादिप्रमाणकारणत्वात्; दोषप्रतिबन्धयोरपि तयोः विषये यावन्मात्रमवभासते तावतो [8]यथार्थस्यैव अवभासकत्वात्। न च साक्षिचैतन्यमात्रं रजतादिप्रतीतिनिमित्तं इति युक्तम्[9], इन्द्रियान्वयव्यतिरेकविरोधात। न च अधिष्ठानविषयतया इन्द्रियान्वयव्यतिरेकौ अन्यथासिद्धौ इति शङ्कनीयम्, अख्यातिवादप्रसङ्गात्; इन्द्रियजन्यं इदमंशज्ञानम्, रजतज्ञानं च साक्षिचैतन्यलक्षणं इति [10]ज्ञानद्वयाभ्युपगमात्। स्यादेतत्—'इदं रजतम्' इति संसर्गोऽपि साक्षिचैतन्येन अनिर्वचनीयः अवभासते; तत्र कथं अख्यातिप्रसङ्गः?—इति। नैतत्सारम्, सत्यमिथ्यावस्तुविषयज्ञानद्वयाभ्युपगमे सति अख्यातिवाद[11]प्रसङ्गस्य अशक्यपरिहारत्वात्। किं च यदनिर्वचनीयं रजतादिभ्रान्तौ शुक्तिकादिगतमवभासते, तत् किं तस्य सहजम्, आहोस्वित् आगन्तुकम्, इति वाच्यम्। आद्ये कल्पे तस्य शुक्तिकादि[12]प्रमाणज्ञाननिवर्त्यत्वात्, जातस्य जन्तोः आद्येनैव शुक्त्यादिज्ञानेन तन्निवृत्तेः उत्तरकालं न अवभासेत। आद्येनैव ज्ञानेन [13]अनिवृत्तौ उत्तरज्ञानेनापि विशेषाभावात न निवर्तेत। अथागन्तुकम्, तर्हि तदुत्पत्तिकारणं वाच्यम्। न तावत् दोषादिसहकृतशुक्तेरेवासौ परिणामः, सत्यत्वप्रसङ्गात्; शुक्तेः तत्सहकारिदोषादेरपि सत्यत्वात्।

---

१. B: प्रवृत्त्यनुपपत्तेः

२. B: अपिण्डः; E: अखण्डरूपत्वात्

३. E: शब्दाप्रवृत्तेः

४. A corrects this wrongly into उपपन्ना

५. E: प्रतीतितया

६. A inserts न च

७. A: संभवः

८. B: अयथार्थ

९. E omits इति युक्तम्

१०. A B: ज्ञानान्वयाभ्यु

११. B omits वाद

१२. E omits आदि

१३. E: अनिवृत्तिरज्ञानेन

नाप्यात्मपरिणामः, रजतादेः बहिष्ट्वेनैव अवभासनात्, सत्यत्वप्रसङ्गाच्च। न च आत्मगतस्यैव सतः[1] शुक्तिकादिसंसर्गावभासो भ्रान्तिनिमित्तः इति युक्तमाश्रयितुम्, आत्मख्यातिप्रसङ्गात्। न च[2] मायैव रूप्याद्यर्थतज्ज्ञानाकारेण[3] विवर्तते इति युक्तम्, मायाया अप्यात्मगतत्वे सति तत्कार्यस्यापि 'अहं रजतम्' इति आत्मधर्मत्वेनावभासप्रसङ्गात्; विषयगतत्वे सति रूप्यदिज्ञानस्यापि तद्विवर्तत्वात्[4] विषयाश्रयत्वप्रसङ्गः। ततश्च सम्यक् ज्ञानमपि[5] तदाश्रयमेवेति विषयस्यैव चेतनत्वप्रसङ्गः। अनिर्वचनीयत्वे च[6] रजतादेः 'सदिदं रूप्यम्' इति सत्त्वप्रतीतिरपि विरुध्येत। अधिष्ठानसत्त्वसंसर्गात् अनिर्वचनीयस्यापि सत्त्वप्रतीतिः, इति चेत्, न; सत्यानिर्वचनीययोश्च संसर्गस्य सत्त्वे सति अबाध्यत्वप्रसङ्गात्; असत्त्वे संसर्गज्ञानस्य निरालम्बनत्वप्रसङ्गात्[7]। अनिर्वचनीयत्वे च तत्संसर्गोऽप्यनिर्वचनीयः तत्संसर्गोऽप्यनिर्वचनीयः[8] इत्यनवस्थानात् न किञ्चिदपि सिध्येत्। यदि च भ्रान्तौ[9] अनिर्वचनीयमेव रूप्यं सदात्मना अवभासेत[10], तथा सति अन्यत्रापि सद्भावे[11] किं सदेव अवभासते[12] किं वा अनिर्वचनीयं इति सन्देहानिवृत्तेः अनाश्वासः[13] स्यात्। ततश्च[14] सकलव्यवहारलोपः प्रसज्येत। तस्मात् न अनिर्वचनीयख्यातिः भ्रान्तिः इति युक्तम्। किं तु अख्यातिरेव सा युक्ता। तथा हि—'इदम्' इति संप्रयुक्तविषयत्वात् ग्रहणात्मकमेव ज्ञानम्। तत्र चक्षुरिन्द्रियं दोषावरुद्धशक्तित्वात् न पुरोवर्तिवस्तु शुक्त्याकृतिविशिष्टं गृह्णाति, किं तु[15] 'इदम्' इति व्यक्तिमात्रमेव। तथा रजतानुभवसंस्कारोऽपि विषयगतसादृश्यादिदोषात् मनोगतरागादिदोषाद्वा प्रतिबद्धः न रजतव्यक्तिविशेषस्मृतिं जनयति; किं तु रजताकृतिमात्रस्मृति-[16]

---

१. A: सकृत् for सतः
२. E omits च
३. B omits तत्
४. B: मायाविवर्तत्वात्
५. B: ज्ञानमेवेति
६. A E omit च
७. A E: प्रसङ्गः
८. A E have only one तत्संसर्गोऽपि
९. B: भ्रान्तं तावदनिर्वचनीयं
१०. E: भासते
११. A E: सदवभासे
१२. B: भासेत
१३. B: अनाश्वासप्रसङ्गात्
१४. B omits ततश्च
१५. E च for तु
१६. E: रजतं इति रजताकृति

मेव। ततश्च समान्यविशेषयोः अन्योन्यसंसर्गापेक्षयोरे[1]व अवभासमानत्वात्, तयोश्च दोषादेव असंसर्गाग्रहणात्, भास्वरत्वादिरूपेण अनुभूतरजतव्यक्तिसदृशत्वाच्च पुरोवर्ति-वस्तुनः तयोरनुत्पन्नेऽपि संसर्गविज्ञाने 'रजतम्' इति पुरोवर्तिवस्तुनि रजतार्थी प्रवर्तते। ततश्च दुष्टकारणजन्यत्वेन असंपूर्णविषय[2]विज्ञानयोः स्वार्थाविवेचकत्वात् अख्याति[3]त्वैवाचोयुक्तिः, न पुनः अत्यन्तानवभासनात्। अत एव अयथार्थव्यवहार-प्रवर्तकत्वात भ्रान्तित्वसिद्धि[4]रपि तयोरेवोपपद्यते। एवं च सति यथार्थत्वात् ज्ञानयोः न निरालम्बनत्वप्रसङ्गः। नाप्यनाश्वासप्रसङ्गः। न च सत्संवित्तिविरोधो [5]वा रूप्यसंवित्ति-विरोधो वा, सत एव रूप्यस्य स्वात्मनैवा[6]वभासाभ्युपगमात्। न खलु 'इदं रजतम्' इति संसर्गप्रतीतिविरोधः; संसर्गज्ञानस्यासिद्धत्वात् [7]रजतार्थिप्रवृत्तेश्च प्रतीतिसामान्य-विशेषयोः असंसर्गाग्रहणाद[8]प्युपपत्तेः। तस्मात् ग्रहणस्मरणयोः अविवेक एव इदं रज-तादिभ्रमः[9]। क्वचित् ग्रहणयोः अविवेकभ्रान्तित्वव्यवहारः यथा मधुरादौ तिक्ताद्यव-भासः। ततश्च ग्रहणस्मरणाविवेकात् ग्रहणाविवेकाद्वा सर्वत्र भ्रान्त्युपपत्तेः संसर्गज्ञाना-संभवाच्च ज्ञानस्य भ्रान्तित्वप्रसिद्ध्यनुपपत्तिः अख्यातिमेव गमयति। बाधप्रसिद्धि-रपि[10] तयोरेव अविविक्तविज्ञानयोः विवेकेन उदयात् उपपन्नतरा--इति[11]।

अन्ये मन्यन्ते--'इदं रजतम्' इति अन्यथाख्यातिरेव भ्रान्तिर्युक्ता। तथा हि। दोषापेतमिन्द्रियं पूर्वानुभवसंस्का[12]रसध्रीचीनं च पुरोवर्तिशुक्तिशकलसंप्रयुक्तं काचादिदोषवशात् रजतसंस्काराच्च रजतात्मकमेव तत् अवभासयति। ततश्च भ्रान्तौ अन्यस्य अन्यात्मना अवभासनात् भ्रान्तिः अन्यथाख्यातिः इति गीयते। तदयं प्रयोगः

---

१. A E omit एव
२. B omits वि
३. B omits त्व
४. A B E: रिति; but A corrects it into रपि
५. B omits वा
६. B omits अवभास
७. E: रजतादि
८. B: अभ्युपपत्तेः; E: अग्रहणाद्यनुपपत्तेः
९. B:अविविक्तयोरेवेदं रजतमिति विभ्रमः
१०. B: प्रवृत्ति
११. B: उपपन्ना इति
१२. E omits संस्कार

"विवादगोचरापन्नं पुरोवर्ति [1]वस्तु रजतज्ञानालम्बनं भवितुमर्हति, अतदुपायत्वे सति तदर्थिनः तद्व्यवहारविषयत्वात्, संप्रतिपन्नरजतवत्[2]। अथ वा सामानाधिकरण्यव्यवहारो धर्मिसंसर्गज्ञानपूर्वको भवितुमर्हति[3], अगृहीतासंसर्गसामानाधिकरण्यव्यवहारत्वात्, यथा 'अयं घटः' इति सामानाधिकरण्यव्यवहारः" इति[4]। अपि च यथार्थत्वे ज्ञानस्य अयथार्थव्यवहार[5]हेतुत्वं भ्रान्तित्वं वा न संभवति, अतिप्रसङ्गात्। अथापि [[6]स्यात् 'शुक्तिरजतयोः विविक्तावभासे सति संसर्गज्ञानस्यापि असंभवात् तयोरविवेकः संसर्गज्ञानवादिनापि समाश्रयणीयः; ततश्च यादृशे तयोरविवेके सति संसर्गज्ञानमिष्यते तादृशे सति संसर्गप्रवृत्तिरेव अभ्युपगम्यताम्[7], किं तत्र संसर्गज्ञाने[8]र्न कल्पकशून्येन?' इति। नैतत्सारम्। न हि [9]ज्ञानद्वयमभ्युपगम्य तयोरविवेकनिमित्तं संसर्गज्ञानमस्माभिरिष्यते। किं तु शुक्तिरजतयोः स्वरूपेणैव सुपुप्तयोः संस्कारसहितदुष्टकारणसामग्रीविशेषादेव [[10]संसर्गज्ञानमभ्युपगम्यते। ततो न ससंसर्गज्ञानकारणादेव] संसर्गव्यवहारसंभवे[11]ः। तत्र दोषसंप्रयोगे[12]संस्कारेभ्यो [13]ज्ञानद्वयं परिकल्प्य तयोरेवाविविक्तयोः संसर्गव्यवहारकारणत्वकल्पनात् वरं तेभ्य एव [सं[14]सर्गज्ञानमभ्युपगम्य तत [15]एव] संसर्गव्यवहारकल्पनम्; कल्पनालाघवात्, अन्यत्र संसर्गव्यवहारस्य संसर्गज्ञानपूर्वकत्वनियमाच्च। न च भ्रान्तिज्ञानस्य अयथार्थत्वाभ्युपगमेऽपि[16]अनाश्वासप्रसङ्गः; भ्रान्तावेव तन्नियमात्। अख्यातिपक्षेऽपि यथार्थज्ञानस्य [17]अयथार्थव्यवहारहेतुत्वे सति सर्वत्र सन्देहात् अनाश्वासो

---

१. E omits वस्तु
२. E: वदिति
३. E: अर्हतीति
४. B E omit इति
५. A E insert हेतु before व्यवहार
६. E omits the part within brackets.
७. A E: गम्यतामिति
८. A: ज्ञानेन येन
९. B: ज्ञानान्वय
१०. E omits the portion within brackets.
११. A: संभवात्
१२. B: संप्रयोगः
१३. B: ज्ञानान्वयम्। The ms. C begins only from ज्ञानद्वयं
१४. A E omit the part within brackets.
१५. C: त एव
१६. C omits अपि
१७. B: अयथाव्यवहार

दुष्परिहरः[1] स्यात्। बाधकज्ञानादेव अनाश्वाससंभव इति चेत्, [2]संसर्गज्ञानस्य अयथार्थत्वेऽपि समानः[3]। अत एव न[4] भ्रान्तिज्ञानस्य निरालम्बनत्वप्रसङ्गोऽपि दोषाय[5]; यथाप्रतिभासं सर्वस्य सत्ताभ्युपगमे भ्रान्तित्वासंभवात्, बाधाभावप्रसङ्गाच्च। न च वाच्यम् 'यस्मिन् ज्ञाने[6] योऽर्थः अवभासते स एव तस्यालम्बनं इति[7] घटादिज्ञाने व्याप्तत्वात् रजतावभासस्य शुक्तिशकलाद्यालंबनत्वकल्पना[8] न युक्ता; रजतप्रतीतिविरोधात्' इति। यावता ज्ञानप्रयुक्तव्यवहारविषयत्वेन ज्ञानालम्बनत्वं घटादौ दृष्टम्, तदिह रजतज्ञानप्रयुक्तव्यवहारविषयत्वात् शुक्तिशकलस्य[9] रजतज्ञानालम्बनत्वोपपत्तिः। दर्शितं चानुमानम् [[10]'रजत[11]ज्ञानालम्बनं पुरोवर्ति वस्तु, रजतज्ञानप्रयुक्तव्यवहारविषयत्वात्, संप्रतिपन्नरजतवत् इति।] दर्शितश्च यथाप्रतिभासं सर्वस्य यथार्थत्वे भ्रान्तिबाधाभावप्रसङ्गः। किं च संसर्गव्यवहारस्य अतज्ज्ञानपूर्वकत्वं [12]संसर्गज्ञानस्य अयथार्थत्वं[13] वा[14] भ्रान्तिबाधानुपपत्त्यैव आश्रयणीयम्। उभयथाप्यनाश्वासप्रसङ्गो बाधकज्ञानेन[15][16] नियमोपपत्तिश्च तुल्यैव दर्शिता। तथा सति अनेकज्ञानकल्पनात् वरं एकस्य संसर्गज्ञानस्य कल्पनं इति भ्रान्तिबाधानुपपत्तिः अनन्यथासिद्धा[17] सती अन्यथाख्यातिमेव [18]कल्पयति; अनिर्वचनीयस्य प्रतीतेरेवासंभवात् दूरनिरस्तैव अनिर्वचनीयख्यातिः इति। अतः अन्यथाख्यातिरेव भ्रान्तिः—इति।

---

१. B E: हारः
२. C: तर्हि ज्ञानस्य यथार्थत्वेऽपि तत्समानम्
३. E: समानम्
४. A E omit न
५. E: दोषः
६. B: विज्ञाने
७. E omits इति
८. B C: शुक्त्यालम्बनत्व
९. E omits आदि
१०. C omits the part within brackets
११. B C: तज्ज्ञान
१२. A inserts संसर्गज्ञानपूर्वकत्वं
१३. C: यथार्थत्वं
१४. C omits वा
१५. C: भ्रान्तिज्ञाने बाधक
१६. E: ज्ञाननियमोप
१७. A: अन्यथा
१८. A: गमयति

तत्र[1] प्रतिविधीयते। न तावत् भ्रान्तिः अख्यातिरिति[2] युक्ता[3], संसर्गप्रवृत्त्यनुपपत्तेः, ज्ञानद्वयकल्पनागौरवाच्च[4]। तथा हि—न तावत् संसर्गज्ञानाभावे[5] सति संसर्गव्यवहारः संभवति; अप्रतीतेऽर्थे व्यवहारानुपपत्तेः, अतिप्रसङ्गाच्च। अथ सामान्यविशेषयोः प्रतीयमानत्वात् तयोश्च अन्योन्यसम्बन्धापेक्षयोः[6] असंसर्गग्रहणात्[7] संसर्गव्यवहारोपपत्तिः इति। तदप्यसत्[8]; सामान्यमात्रविषयस्य वा विशेषमात्रविषयस्य[9] वा विज्ञानस्य संसर्गज्ञानत्वाभावात्; अन्यविषयज्ञानस्य[10] च अन्यव्यवहारहेतुत्वे[11] सति अतिप्रसङ्गात्; असंसर्गग्रहणस्य[12] च[13] ज्ञानानुत्पत्तिमात्रत्वात्[14] तस्य च[15] व्यवहारहेतुत्वानुपपत्तेः। अथ सामान्यादिज्ञानमेव असंसर्गग्रहसहितं[16] व्यवहारहेतुः इति ब्रूयात्, तदपि न साम्प्रतम्; अप्रतिपन्ने सम्बन्धे तद्व्यवहारासम्भवस्य तदवस्थत्वात्, अन्यत्र संसर्गव्यवहारस्य तज्ज्ञानपूर्वकत्वनियमाच्च। यदि च सर्वत्र अगृहीतासंसर्गस्वरूपज्ञानादेव व्यवहारः कल्प्येत, न तर्हि[17] प्रमाणभ्रान्तिविभागसिद्धिः। तस्मात् न संसर्गज्ञानानभ्युपगमे[18] संसर्गव्यवहारसंभवः। अपि[19] च संसर्गव्यवहारानुसारेण एकमेव[20] संसर्गज्ञानं परिकल्प्य तेनैव भ्रान्तिबाधसंभवे[21] सति [अनेकज्ञानकल्पना[22] न युक्ता। ननु

---

१. C: अत्राभिधीयते

२. B C omit इति

३. B omits युक्ता

४. B: ज्ञानान्वयकल्पनाभावाच्च ;
E: कारणद्वय for ज्ञानद्वय

५. C: ज्ञानासंभवे

६. C: संसर्गापेक्षयोः

७. B C: ग्रहणात्

८. C omits अपि

९. C: मात्र......र्गज्ञानत्वाभावात्

१०. A: अन्यविज्ञानस्य अन्यव्यवहारानुपपत्तेः, अहेतुत्वे

११. B: अन्यविज्ञानस्य अन्यव्यवहारहेतुत्वे

१२. C: ग्रहण

१३. E omits च

१४. A C: ज्ञानानुपपत्ति ;
E: यज्ज्ञानानुपपत्ति

१५. A omits च

१६. B C: अग्रहण

१७. E: तावत् for तर्हि

१८. E: अभ्युपगमे

१९. C: अतः;
E: अथ

२०. C: omits एकम्

२१. All except C read बाधासंभवे

२२. E omits the portion within brackets.

संसर्गाभावे सति] कथं तज्ज्ञानं परिकल्प्यते[1], भवत्पक्षे वा कथं संसर्गज्ञानाभावे संसर्गव्यवहारः? भ्रान्तित्वात् अदोष इति चेत्, अन्यत्र[2] समानश्चर्चः। न च अनिर्वचनीयख्यातिपक्षे[3] संसर्गाभावोऽपि संप्रतिपन्नः। यथाप्रतिभासं इदंरजतयोरपि बाधयोग्यसंसर्गाभ्युपगमात्। अपि च अख्यातिपक्षे कोऽयं इदंरजतयोरसंसर्गो[4][5] नाम यदग्रहणात् संसर्गव्यवहारः[6] तयोः अभ्युपगम्येत? न तावदभावः, [[7]अनभ्युपगमात्। अथ दृश्ये प्रतियोगिनि तत्स्वरूपमेव, तर्हि गृहीत एव तयोरसंसर्गः 'इदम्, रजतम्' इति तयोः स्वरूपग्रहणात्[9]। अथ शुक्तित्वादेः] कस्यचिदंशस्य[10] अग्रहणम्, [तर्हि[11] सर्वपदार्थज्ञानानां[12] भ्रान्तित्वप्रसङ्गः। स्यादेतत्—रजतांशस्य इदमंशस्य वा[13] शुक्तित्वाद्यंशान्तरसंसर्गः तयोरसंसर्गः,[14] तदग्रहणाच्च संसर्गप्रवृत्तिः[15]—इति।] तर्हि इहापि द्रव्यत्वाद्यंशान्तरग्रहणात्[16][17] गृहीत एवासंसर्गः[18]। न हि सर्वात्मना अर्थस्य केनचिदपि ज्ञानेन[19] ग्रहणं संभवति[20]। यदंशग्रहणात्[21] भ्रान्तिः निवर्तते तदंशसंसर्गयोः[22] असंसर्गः इति

---

१. A B D: कल्प्येत
२. C E: अन्यत्रापि
३. E: वादिपक्षे
४. A: इदंरजतांशयोः; C omits इदंरजतयोः; E: इदंरजताङ्गयोः
५. A erroneously alters असंसर्गो into संसर्गो
६. C: व्यवहारः, dropping तयोरभ्युपगम्येत
७. E omits the portion within brackets
८. A: अदृश्ये
९. C: तयोरन्योन्यप्रतियोगिस्वरूपग्रहणात्
१०. E: अङ्गस्य
११. E omits the part within brackets.
१२. C: ग्रहणानां for ज्ञाननां; A inserts an अथ here.
१३. C: च for वा
१४. A omits तयोरसंसर्गः and reads तदग्रहणाच्च; C: संसर्ग एव तयारसंसर्गः; B: तदनुग्रहणाच्च
१५. C: अप्रवृत्तिः
१६. E omits आदि
१७. C: संसर्गग्रहणात्
१८. E: संसर्गः
१९. C: विज्ञानेन
२०. C adds इति
२१. C: यद्ग्रहणवशात्
२२. A C: संसर्गस्तयोः

चेत्, नैतत्सारम् । न ह्य[1]र्थान्तरसंसर्ग एव अर्थान्तरा[2]संसर्गो भवति । किं तु [3]विरोधिसंसर्गे सति विरोध्यन्तरसंसर्ग[[4]स्यैव अभावो भवति । स च अभावानभ्युपगमात् न युष्मत्पक्षे सिध्येत् । द्वयोः प्रतियोगिनि तयोः स्वरूपस्यैव संसर्गाभावव्यवहारास्पदत्वे सति असंसर्ग][5]ग्रहणस्यैव सिद्धत्वात् न संसर्गव्यवहारसिद्धिरित्युक्त[6]म् ।

अपि च गृह्यमाणादिदमंशात् रजतस्मृतिः स्वार्थं किमिति न विवेचयेत्? स्मृतित्वानवभासात् इति चेत्, किं तत्स्मृतेः स्वरूपमेव, किं वा अर्थान्तर[7]म्? आद्ये [8]कल्पे स्मृतेरेव अनवभासात् न रजतमात्रमपि[9] सिध्येत् । उत्तरस्मिन् अर्थान्तरान[10]वभासेऽपि[11] स्मृतिः किमिति स्वार्थविवेकं[12] न कुर्यात्? एवं ग्रहणेऽपि विकल्प्य दूषयितव्यम् । तस्मात् अख्यातिपक्षे संसर्गज्ञानानभ्युपगमे सति संसर्गव्यवहाराभावात्, अनेकज्ञानकल्पनागौरवात्, इदंरजतयोः असंसर्गा[13]ग्रहणानिरूपणात् अपरोक्षरजतानुभवविरोधात्, संसर्गज्ञानव्यतिरेकेण संसर्गव्यवहारे सति अन्यत्राप्यनाश्वासप्रसङ्गात्, अप्रतिपन्ने च संसर्गे 'नेदं रजतम्' इति संसर्गनिषेधेनैव बाधानुपपत्तेः, स्मृतिग्रहणयोः अन्योन्यविषयाविवे[14]चैकत्वासंभवाच्च अनुपपन्नो [15]निष्प्रमाणकश्चायं अख्यातिपक्षः।

अन्यथाख्यातिपक्षेऽपि [16]न किञ्चित् प्रमाणमुत्पश्यामः । नै[17]नु उक्तं पुरोवर्ति वस्तु र[18]जतज्ञानालम्बनम्, तदर्थिनः तत्प्रवृत्तिविषयत्वात्, संप्रतिपन्नरजतवत्, इति ।

---

१. E: आत्मान्तर
२. A: नह्यर्थान्तरसंसर्गो भवति
३. A: अविरोधि
४. B: संसर्गाभावो ; E omits the portion within brackets.
५. C: ...संसर्गाग्रहण
६. All except C: इति युक्तं
७. C adds इति
८. C omits कल्पे
९. C: रजमिति
१०. B C: अन्तरस्य अनव
११. C omits अपि
१२. E: वैकल्यं
१३. C: ग्रहण
१४. C: विवेचकत्व
१५. C: अप्रमाणक
१६. E omits न
१७. B: यदुक्तम्
१८. C: रजतज्ञानालम्बनः
E: रजतालम्बनः

तदयुक्तम्, हेतोः अनैकान्तिकत्वात्। इह[1] खलु सर्पादिदर्शनात् दण्डादिसाधने प्रवृत्तिः दृश्यते। तथापि न दण्डादिरेव सर्पादिज्ञानालम्बनं भवति। अथ अतदुपायत्वे सति[2] तदर्थिनः तद्व्यवहारहेतुत्वात् इति हेतुविशेषः, तदापि[3] घटादिज्ञानप्रयुक्त[4]-घटाद्यानयनादौ तद्गत[5]गुणादेरप्यानयनादिरस्ति। न चैतावता द्रव्यज्ञानस्य गुणादिः आलम्बनं भवति। एतेन[6] अनैकान्तिको हेतुः। विरुद्धो व्यभिचारी[7] च—विगीतं[8] रजतज्ञानं रजतालम्बनं भवितुमर्हति[9]; रजताकारज्ञानत्वात्; यत् यदाकारं विज्ञानं तत् तदालम्बनं दृष्टम्[10], यथा परमार्थरजतज्ञानम्; तथा[11] चेदं प्रकृतम्; तस्मात् तथा—इति।

[12]यदप्युक्तम्—इदंरजतादिप्रवृत्तिः संसर्गविज्ञानपूर्विका, संसर्गप्रवृत्तित्वात्, [13]संप्रतिपन्नसंसर्गप्रवृत्तिवत्—इति, तत्र सिद्धसाधनोऽयं[14] हेतुः; यथाप्रतिभासं इदं-रजतयोरपि[15] अनिर्वचनीयसंसर्ग[16]तज्ज्ञानाभ्युपगमात्। न च भ्रान्तिबाधानुपपत्तिः अन्यथाख्यातिं[17] कल्पयति, अन्यथाख्यातिपक्षे तयोरसंभवात्। तथा हि—न तावत् भ्रान्तिज्ञानं संभवति, विषयानिरूपणात्। न च निर्विषयं ज्ञानं[18] निरूपयितुं शक्यम्। ज्ञायते अर्थः[19] अनेन इति ज्ञानम्[20]। तत्र असति संसर्गे भ्रान्तिज्ञानं किं अवभासयेत्? [21]अनवभासकत्वे वा कथं तत् ज्ञानमुच्येत[22]? तस्मात् इदंरजतयोः संसर्गस्य अत्यन्ता-

---

१. B: इहापि खलु
२. B C: सतीति हेतुं विशिष्याः
३. A D: तथापि
४. E: प्रयुक्तानयनादौ त ... देरप्या
५. C: गुणाद्यानयनादिरस्ति
६. B C: अतः
७. A B: विरुद्धाव्यभिचारी
८. C omits विगीतं
९. C omits भवितुमर्हति
१०. C omits दृष्टं
११. C: तस्मात् रजतालम्बनमिति
१२. C: यच्चोक्तमियं रजतार्थिप्रवृत्तिः संसर्गज्ञान
१३. C omits सं
१४. E omits अयं
१५. E omits अपि
१६. C E omit तत्
१७. B: अन्यथाज्ञानं
१८. A D E: निर्विषयज्ञानं
१९. C omits अर्थः
२०. All but C read विज्ञानं
२१. A E: अवभासकत्वे
२२. C E: उच्यते

सत्त्वे तस्य व्यवहारविषयतया[1] प्रतिभासासंभवात्, संसर्गानवगमे[2] सति अख्यातिपक्षे इव संसर्गप्रवृत्त्यनुपपत्तिः[3] अन्यथाख्यातिपक्षेऽपि तुल्या। निरालम्बनज्ञानाभ्युपगमे च सर्वत्र अनाश्वासप्रसङ्गो दुष्परिहरः। संसर्गस्य च अत्यन्तासत्त्वकल्पना[4] संसर्गानुभवविरुद्धा। अपि[5] च देशकालव्यवहितरजतादेः इन्द्रियजन्यगोचरत्वकल्पना प्रत्यक्षस्य वर्तमानसम्बन्धार्थग्रहणनियमविरुद्धा[6]। न च भ्रान्तित्वात् अदोष इति युक्तम्; भ्रान्तेरेव[7] अस्मिन् पक्षे अनुपपत्तेः दर्शितत्वात्। न च बाधोऽपि[8] संभवति। तथा हि—भ्रान्तिज्ञानेन समानविषयं भिन्नविषयं वा बाधकज्ञानमभ्युपगम्येत[9]। आद्ये कल्पे, धारावाहिकयोरिव तयोः[10] परस्परविरोधाभावात्, न बाध्यबाधकभावः। उत्तरस्मिन् उभयोरपि घटपटज्ञानयोरिव भिन्नविषयत्वात् नतरां बाध्यबाधकसंभवः[11]। स्यादेतत्—भ्रान्तिप्रतिपन्नार्थाभावविषयं उत्तरज्ञानमिति तद्बाधकत्वसिद्धिः[12]—इति। तदप्यपेशलम्, उत्तरज्ञानस्यैव भ्रान्तित्वोपपत्तेः। [पूर्वज्ञानं[13] असंजातविरोधित्वात् स्वार्थप्रतिष्ठम्; उत्तरज्ञानं पुनः स्वोत्पत्त्यैव बाधितविषयं इति तस्यैव भ्रान्तित्वं युक्तम्। अथ उत्तरज्ञानस्य] व्यवहाराविसंवादात् प्रामाण्यमुच्येत, तथा सति अर्थक्रियाविसंवादात्[14] प्रामाण्यनिश्चयः इति परतः प्रामाण्यं मीमांसकानां अनिष्टमापद्येत[15]। तार्किकाणामपि[16] अर्थ-

---

१. A E: विषयप्रतिभास
२. E: संसर्गज्ञानावगमे
३. C: प्रतीत्यनुप
४. B: असत्यत्व;
   E: अनवभास
५. E omits a considerable portion here and instead introduces an argument from the bhedābhedavāda. This is probably due to scribal error.
६. C omits सम्बन्ध
७. C: भ्रान्तिरेव
८. C: वाचोऽपि
९. C: गम्यते
१०. C omits तयोः
११. C: नितरां बाधासंभवः
१२. A: बाधकतासिद्धिः; C: बाधकसिद्धिः
१३. C: आद्य for पूर्व; B omits the part within brackets.
१४. C: अर्थक्रियासंवादात्
१५. B: प्रदिष्ट; C: अनिष्टमिद
१६. C omits अपि

क्रियाज्ञानस्य स्वतःप्रामाण्यनिश्चये सति अनिष्टापत्तिः। अर्थक्रियान्तरसंवादाधीनत्वे[2] तस्याप्येवं तस्याप्येवं इत्यनवस्था। न[3] च पूर्वत्वं उत्तरत्वं वा ज्ञानस्य प्रामाण्यकारणम्, पूर्वप्रवृत्ते अपि शुक्त्यादिज्ञाने कदाचित् उत्तरभाविरजतादिभ्रमदर्शनात्। तस्याप्युत्तर-भावि प्रमाणज्ञानं बाधकं भविष्यति इति चेत्, तर्हि प्रथमतरप्रवृत्तशुक्तिकाज्ञानस्य विभ्रमत्वप्रसङ्गः। उत्तरशुक्तिकाज्ञानानिसंवादात् प्रामाण्यमिति चेत्, तर्हि[6] भ्रान्त्यन्त-राविसंवादात्[7] रजतज्ञानस्यापि प्रामाण्यप्रसङ्गः। तस्मात् अन्यथाख्यातिपक्षे संसर्गस्य अत्यन्तासत्त्वे सति संसर्गज्ञानतत्प्रवृत्त्योरसंभवात्, निरालंबनज्ञानस्यापरिहार्यत्वात्, अनाश्वासप्रङ्गात्[9], रजतादेश्च व्यवहितत्वकल्पनायां शुक्तिसंसर्गानुभवविरोधात्, ज्ञानप्राप्तस्य ज्ञानान्तरेण बाधानुपपत्तेः, अप्राप्तनिषेधानुपपत्तेश्च न[10] भ्रान्तिबाधानुपपत्तिः कटाक्षेणापि अन्यथाख्यातिमीक्षते; किं तु अनिर्वचनीयख्यातिमेव कल्पयति।

तथा हि। शुक्तिसंसृष्टतयैव[11] रजतस्य प्रतिभासमानत्वात् न अत्यन्तमस-त्त्वम्[12]। नापि तस्य परमार्थसत्यत्वं[13] संभवति, बाध्यमानत्वात्। ततश्च रजतादिप्रतीतिबा-धान्यथानुपपत्तिः भ्रान्तेः अनिर्वचनीयख्यातित्वं कल्पयति। शुक्तिरजतसंसर्गस्य[14] अत्यन्तासत्त्वे अप्रतिभासमानत्वे वा संसर्गप्रवृत्त्यभावो[15] दर्शितः। तथा ज्ञानप्राप्तस्य अत्यन्तसुप्तस्य वा बाधानुपपत्तिरप्युक्ता। तस्मात् मायैव सदसद्भ्यां अनिर्वचनीया सती रजतादिस्वरूपेण विवर्तमाना भ्रान्तिबाधव्यवहारमुद्वहति इति युक्तम्।

---

१. A: संवेदा
२. C: अधीनत्वं
३. A omits न
४. A: विभ्रम
५. C: कादिज्ञान
६. A D E: तदपि
७. C: विसंवादात्
८. B: नत्वस्यापरि
९. A D E: प्रसङ्गः
१०. C omits न
११. A: संसर्गतयैव
१२. B: अत्यन्तासत्त्वं
१३. B C: सत्त्वं
१४. C: यथा हि शुक्तिकायां रजत
१५. C: प्रत्ययाभावो

यत्पुनरुक्तम्—सद्विलक्षणस्य [2] तुच्छत्वात् तुच्छविलक्षणस्य च सत्त्वात् न उभयस्वभावविलक्षणं [3] किञ्चित् संभवति—इति, तदसत्। [4] अबाध्यत्वात् सतः सत्त्वम्, तुच्छविलक्षणत्वात् वा? तुच्छस्यापि निरुपाख्यत्वात् असत्त्वम्, सद्विलक्षणत्वात् वा?' इति [5] सन्देहानिवृत्तेः तुच्छविलक्षणं सदेव सद्विलक्षणं तुच्छमेव [6] इत्यनुमातुमशक्यत्वात्, मिथ्यात्वस्य उभयविलक्षणत्वोपपत्तेः भ्रान्तिबाधानुपपत्तिसिद्धत्वाच्च [[7] सदसद्विलक्षणस्य अनिर्वचनीयस्य न [8]] सदसत्त्वप्राप्तिः।

यदप्युक्तम्—अनिर्वचनीये रजतादिशब्दप्रवृत्तिनिमित्ताभावात् शब्दानुवेधेन प्रवृत्तिः अनुपपन्ना—इति, तदपि [9] अपर्यालोचितमेव उद्भावितम्, यावता रजतसंस्कारनिमित्ता [10] रजतभ्रान्तिः; स च संस्कारो [11] रजतशब्दोल्लिखित [12] पूर्वानुभवजन्यत्वात् दोषसंप्रयोगाभ्यां सह भ्रान्तिज्ञानमुत्पादयन् [13] रजतशब्दमनुस्मारयति [14]; ततश्च युगपदेकसंस्कारसमुत्थापितत्वात् रजतशब्दप्रत्यययोः भ्रान्तस्य रजतशब्दानुवेधेन प्रवृत्तिः। अत एव अनिर्वचनीयस्य रजतादिशब्दानर्हस्यापि [15] तद्वाच्यत्वभ्रमः [16] इत्यनिर्वचनीये शब्दप्रवृत्तिनिमित्ताभावेन [17] न मनः खेदनीयम् [18]।

---

१. A inserts रजतादिवस्तुविषये

२. C: सद्विलक्षणस्य तुच्छत्वातुच्छ.... तदसत्।
E: सविलक्षणत्वान्नोभयस्वभावविलक्षणं संभवतीति;
B: तुच्छातुच्छविलक्षणस्य च सत्त्वात्

३. All except D omit किञ्चित्

४. A: आत्मनोऽबाध्यत्वात्सतः

५. A corrects this into सन्देहादिति प्रवृत्तेः; C: निवृत्तेः

६. C adds वा

७. E omits the part within brackets

८. A omits न

९. C: तदप्यचारु

१०. C: समुत्था

११. A adds अपि

१२. B: ल्लालित

१३. B: उत्पाद्य; C: उत्पादयत्

१४. C: मप्यनु

१५. E: रजतादिशब्दस्यापि

१६. B: वाच्यभ्रम

१७. E: निमित्तान्वेषणे

१८. C: नीयः

यदप्युक्तम्—प्रतीतिकारणमपि अनिर्वचनीये न संभवति—इति, तदपि[1] न चतुरश्रम्, तस्य साक्षिचैतन्यमात्रसिद्धत्वात्। न च रजतादेः साक्षिवेद्यत्वेऽपि तज्ज्ञानस्य इन्द्रियान्वयव्यतिरेकविरोधः [2][अधिष्ठानविषयतया[3] तयोरन्यथासिद्धत्वात्। न चैतावता सत्यमिथ्यावस्तुविषयज्ञानद्वयाभ्युपगमप्रसङ्गः, इदमंशावच्छिन्नसाक्षिचैतन्यस्यैव अधिष्ठानज्ञानफलभूतस्य स्वमायाविवर्तरजतादिसिद्धत्वात्। अयमत्र अधिष्ठानाध्यस्तांशयोः साक्षिचैतन्यसिद्धयोः विशेषः[4]—] अधिष्ठानस्य सत्यत्वेन व्यवहारावस्थायां मायाविवर्तत्वात्[5] अन्तःकरणवृत्तिव्यवधानेन साक्षिसिद्धत्वम्; अध्यस्तस्य[6] व्यवहारावस्थायामपि मिथ्यात्वेन मायाविवर्तत्वात् अव्यवधानेन साक्षिसिद्धत्वम्—इति। अतः संस्कारदोषसध्रीचीन[7]संप्रयोगलक्षणा एका सामग्री संसृष्टार्थविषयं एकमेव ज्ञानं[8] एकफलं जनयति इति न[9] अख्यातिप्रसङ्गः।

यदपीदमवादि—रजतस्य मायाविवर्तत्वे मायायाश्च आत्माश्रयत्वे सति 'अहं रजतम्' इति आत्मसामानाधिकरण्येन अवभासो भवेत्, न बहिरर्थसामानाधिकरण्येन—इति, तदपि मन्दचोद्यम्; आत्मनः सर्वगतत्वेन [10]सर्वार्थसंसर्गात् शुक्त्यवच्छिन्नात्मचैतन्य[11]स्थाविद्याविवर्तरजतस्य शुक्तिसंसर्गवदवभासोपपत्तेः। अन्तःकरणपरिणामलक्षणाधिष्ठानज्ञानफलान्तर्भावाच्च रजतादिसिद्धेः रजतादिज्ञानस्य अन्तःकरणोपाधिकात्माश्रयत्वे[12]ऽवभासोऽपि न विरुध्यते। न च वाच्यम्—रूप्यादेरनिर्वचनीयत्वे सिद्धे [[13]तद्दृष्टान्तावष्टम्भेन बाह्याध्यात्मिकप्रपञ्चस्य अनिर्वचनीयत्वादन्तःकरणेन[14] बाह्यार्थेन]

---

१. C omits अपि and reads नातिचतुरश्रम्
२. E omits the portion within brackets
३. A: ष्ठानज्ञानविषयतया
४. B C: अपि विशेषः; all others अविशेषः
५. E: विवर्ति
६. C: अध्यस्तव्यव
७. A: सध्रीचीने
८. C: ज्ञानफलं
९. C omits नाख्याति
१०. C: सर्वपदार्थ
११. C: चैतन्यस्याविद्या
१२. A C: श्रयत्ववत्; E: आश्रयो न विरुध्यते
१३. C omits the part within brackets.
१४. A: नीयत्वेन सिद्धान्तःकरणेन

च आत्मनोऽवच्छेदसिद्धिः, ततश्चात्मगतमायाविवर्तरूप्यतज्ज्ञानादेः[१] अवच्छेदकेनापि संसर्गवदवभासः, तदेतस्मिन्[२] सर्वस्मिन् सति रूप्यादेः अनिर्वचनीयत्वसिद्धिः--इति। सत्यस्यापि घटादेः [३][आकाशाद्यवच्छेदकत्वदर्शनात्], अवच्छेदकत्वं प्रति अनिर्वचनीयत्वस्य [४]अनवश्यकत्वात् सर्वगतात्म[५]वादिन आत्मनः सर्वमूर्तद्रव्यसम्बन्धस्य संप्रतिपन्नत्वात् सर्वग[५a]तात्मवादिना आत्मनः सर्वमूर्तद्रव्यसम्बन्धस्य संप्रतिपन्नत्वात्, चिज्जडसम्बन्धस्य अवच्छेद्यावच्छेदकत्वव्यतिरे[६]कानिरूपणात्। न च स[७]त्संवित्तिविरोधः, रूप्यादेः अनिर्वचनीयस्यापि सदधिष्ठानतादात्म्येन अध्यस्तत्वात् सत्त्वेन प्रतीत्युपपत्तेः। नापि स[८]दसदनिर्वचनीयसंसर्गस्य अनिर्वचनीयत्वे [[९]तत्संसर्गोऽप्यनिर्वचनीयः]तत्संसर्गोऽपि तथैव इति अनवस्था रूप्यादेः मायामयत्वं[१०] उपहन्ति[११], मायायाः प्रतिभासमात्रशरीरत्वात्, अनवस्थादेरलङ्कारात्। न च अनाश्वासप्रसङ्गः, बाधाबाधाभ्यामेव सत्यमिथ्याविभागव्यवहारोपपत्तेः। अन्यथा सर्ववादिनां अनाश्वासोऽपरिहार्यः[१२] प्रसज्येत। बाधकज्ञानमपि[१३] शुक्त्याद्यधिष्ठानतत्त्वं अवभासयत् तद्गताज्ञानं निवर्तयदेव उदयमासादयति ; ज्ञानस्य अज्ञाननिवर्तकत्वप्रसिद्धेः। निवर्त्यमानं च अज्ञानं रूप्यतज्ज्ञानादि स्वकार्येण सहैव निवर्त्यते,[१४] कारणाभावे कार्यस्य अनवस्थानात्। एवं च सति कल्पनागौरवं च परिहृतं स्यात् ; अनिर्वचनीयमायामात्रकल्पनयैव भ्रान्तिबाधव्यवहारोपपत्तेः; [१५]संप्रयोगादिज्ञा[१६]नैकारणस्य

---

१. B: तदज्ञानादेः ;
 E: रूप्याज्ञानादे
२. C: तस्मिन् सति
 B: तदेकस्मिन्
३. E omits the bracketed part
४. C: अनवकशात् ;
 E: अनावश्यकत्वात्
५. C: गतत्वादिना
५a. C: गतत्वादिना
६. C: रेकेणानिरूप
७. E omits सत्
८. C E: सदनिर्वचनीय
९. E omits the part within brackets
१०. C: मायात्मकत्वं
११. E: आवहन्ति
१२. A: हारः
१३. C: बाधज्ञान
१४. B C: निवर्तते
१५. E: संयोग
१६. C: विज्ञान

अधिष्ठानतत्त्वस्य च[१] सर्ववादिसंप्रतिपन्नत्वात् । तस्मात् भ्रान्तिबाधान्यथानुपपत्तिः[२] अनिर्वचनीयख्यातिमेव कल्पयति इति युक्तम्[३] ।

सौगतास्तु सङ्गिरन्ते—विमत्यापन्नं रूप्यं विज्ञानात्मकं[४] भवितुमर्हति,[५] संप्रयोगव्यतिरेकेणापरोक्षत्वात्, संप्रतिपन्नज्ञानस्वरूपवत्[६] । [७]ततश्च बुद्ध्याकारस्यैव रूप्यस्य दोषवशात्[८] बहिर्वदवभासमानस्य बाह्यत्वमेव बाधकज्ञानमपि 'नेदं रजतम्' इति बाधते । तस्मात् आत्मख्यातिः भ्रान्तिः—इति ।

तदपि निष्प्रमाणकम्, रूप्यादिगतबहिष्ट्वे हेतोरनैकान्तिकत्वात् । न च[९] रूप्यादेः बहिष्ट्वमपि [१०]विज्ञानस्वरूपमेव, [११]अबाध्यत्वप्रसङ्गात् । अतश्च[१२] रूप्यादेः ज्ञानात्मकत्वे प्रमाणाभावात् बाधकज्ञानमपि न तस्य बाह्यत्वं बाधितुमर्हति ; किं तु पूर्वोक्तन्यायेन अनिर्वचनीयमायामेव उपमृद्नाति इति साम्प्रतम् । ननु विवादगोचरापन्नं रजतं[१३] तुच्छं भवितुमर्हति ; बाध्यमानत्वात् ; यत्तुच्छं न भवति न तत् बाध्यमानम् , यथा परपरिकल्पित आत्मा ; तथा रजतादिभ्रमो[१४] निरधिष्ठानो[१५] भवितुमर्हति, विभ्रमत्वात् [१६]केशोण्डुकादिभ्रान्तिवत् इति । अधिष्ठानाध्यस्तयोः उभयोरपि[१७] शून्यत्वं माध्यमिका वर्णयन्ति । तदप्यसत् , तुच्छस्य निरुपाख्यत्वे सति रजताद्य-

---

१. A E omit च
२. B E: बाधानुपपत्तिः
३. B C: सिद्धम्
४. A C E: ज्ञान
५. C omits भवितुमर्हति
६. E: स्वरूपोपपत्तेः
७. C: तद्बुध्याकार
८. E: दोषावगमात्
९. E: omits च
१०. A E: ज्ञानस्वरूप
C: ज्ञानरूप
११. All except C give बाध्यत्व
१२. C: ततश्च
१३. C omits रजतं and reads तुच्छं, बाध्यमानत्वात्, यथा परिकल्पित आत्मा
१४. A C E: विभ्रमो
१५. C. ष्ठानविभ्रत्वात्
१६. C. केशोन्द्रकादिविभ्रमवदिति
१७. B omits उभयोः

नुभवविरोधप्रसङ्गात्, [1]बाध्यमात्रत्वे च हेतोः साध्यसमत्वात्[2]। सन्दिग्धं च प्रयोजकम्[3], अबाध्यमानत्वात्[4] आत्मनोऽतुच्छत्वं उत सत्त्वात् इति।

[5]यत्पुनरुक्तम्---निरधिष्ठानो रजतादिविभ्रमः केशोण्डुकवत्---इति, [6]तत्र केशोण्डुकादेरपि तेजोऽवयवाधिष्ठानत्वात् साध्यविकलो दृष्टान्तः। 'इदं रजतम्' इति अधिष्ठानानुभवविरोधश्च[7]। तस्मात् न शून्यख्यातिरपि भ्रान्तिः। किं[8] तु अनिर्वचनीयमायाविलासः[9] इति सर्वैरेष्टव्यम्[10]।

इति तत्त्वशुद्धौ अनिर्वचनीयख्यातिसमर्थनप्रकरणम्।

---

१. B: बाध्यतामात्रत्वे
   C: बाध्यतामात्रे च
२. C: सिद्धसाधनत्वात्
३. C: सन्दिग्धप्रयोजकश्च किमबाध्य
४. E: बाध्यमान
५. C: यत्तु केशोन्द्रकादिवत् निरधिष्ठानत्वं भ्रमस्य तत्र, केशोन्द्रकादेरपि
६. E: अत्र
७. C: विरोधाच्च
८. E: omits किन्तु
९. E: विलक्षण
१०. B: सर्वैरेव द्रष्टव्यम्

## ॥ अज्ञानस्य भावरूपत्वप्रतिपादनं चतुर्विंशम् ॥

सत्त्वासत्त्वनिरूपणेन गदितुं शक्यौ[1] न जातु स्वयं
यत्तत्त्वं प्रतिबोध्य[2] संसृति[3]मिमां सत्यामिवोद्भासयेत् ।
यज्ज्ञाना[4]दखिला चिदेकनिलया[5] माया निवर्तेत तं
विश्वोत्पत्तिविपत्ति[6]गुप्तिविभवं वन्दे मुदा शार्ङ्गिणम् ॥

संप्रति विचार्यते[7] 'किं ज्ञानाभावमात्रमेव[8] अज्ञानं आहोस्वित् भावरूपम्[9]?' इति । ज्ञानप्रागभावप्रध्वंसयोः अज्ञानत्वप्रसिद्धेः, तयोरेव ज्ञानप्रतिषेधरूपतया अज्ञान-शब्दवाच्यत्वोपपत्तेः, अभावप्रमाणसिद्धत्वाच्च [तयोः[10] न तद्व्यतिरिक्तभावरूपाज्ञाने प्रमाणमस्ति ; नापि तत्प्रसिद्धं लोके ।] अतो ज्ञानाभावमात्र[11]मेव अज्ञानं इति मीमांसकाः तार्किका[12]श्च मन्यन्ते ।

अत्रे[13]दमाचक्ष्महे । सुप्तो[14]त्थितस्य तावत् अज्ञानपरामर्शान्यथानुपपत्तिः भाव-रूपाज्ञाने प्रमाणम् । तथा हि—सुप्तः[15] पुरुषः समुत्थाय 'सुख[16]महं अस्वाप्समेतावन्तं

---

१. E: शक्यं
२. A E: प्रतिबध्य
३. A E: संस्मृति
४. A: विज्ञानात् ; E: ज्ञानादखिला
५. C: विवेकजनिता for चिदेकनिलया
६. A: विवर्ति for विपत्ति
७. C omits संप्रति विचार्यते
८. C: मात्ररूपं and E: मेवा .... .... मीमांसकाः thus omitting the whole portion
९. C: भावमात्रमिति
१०. A omits the part within brackets
११. C: मान for मात्र
१२. E: नास्तिका for तार्किका
१३. C: तत्र
१४. B E: सुषुप्तो
१५. B C: सुषुप्तः
१६. C: गाढमहं ; E: भा....महं स्वप्न-मेतावन्तं

कालं, न किञ्चिदवेदिषम्' इति सुषुप्तिकालीनमज्ञानं परामृशति[1]। स चायं परामर्शः सुषुप्तिकाले[2] अज्ञानानुभवमन्तरेण अनुपपन्नः, विशिष्टानुभवपूर्वकत्वात्[3] विशिष्टपरामर्शस्य[5]। न च ज्ञानाभावस्य सुषुप्तिकाले[4] अनुभवः संभवति, तदा धर्मिग्रहणप्रतियोगिस्मरणाद्यसंभवात्, तदपेक्षत्वाच्च अभावानुभवस्य। न च सुषुप्तिकाले धर्मिग्रहणादि[6] संभवति [[7]निःशेषकरणव्यापारोपरमात्।] निःशेष[8]करणव्यापारोपरमो हि सुषुप्तिः प्रसिद्धा। तस्मात् अभावज्ञानसामग्र्यसंभवात् सुषुप्तौ न ज्ञानाभावानुभवः[9] संभवति। अतो नित्यात्मचैतन्यप्रकाशेनैव मायादिशब्दवाच्यं ज्ञानविरोधात्[10] ज्ञानपर्युदासेन अज्ञानमिति[11] च उच्यमानं भावरूपमेव सुषुप्तौ[12] अनुभूतमज्ञानं उत्तरकालं परामृश्यते[13] इति युज्यते[14]।

स्यादेतत्—नित्यात्मचैतन्येनैव ज्ञाना[15]भावानुभव एव[16] सुषुप्तौ[17] कल्प्यताम्; किं भावरूपानुभवकल्पनया ?—इति। नैतत्सारम्; अभावानुभवस्य[18] धर्मिग्रहणप्रतियोगिस्मरणादिसविकल्पकज्ञानापेक्षत्वात्, तस्य च अन्तःकरणकार्यतया अन्तःकरणमन्तरेण[19]

---

१. E: मर्शति
२. C: कालीनानुभव
 E: कालज्ञानानुभव
३. A E: पूर्विक
४. E: कालानुभवः
५. E has a very corrupt text here: स्मरणानुपपन्नः विशिष्टानुभवपूर्वकत्वात् विशिष्टपरामर्शस्य। न च ज्ञानाभावस्य करणव्यापारोपरमात् सकलकरणव्यापारोपरमो हि सुषुप्तिः प्रसिद्धा etc.,
६. C: ग्रहणं
७. All ms. except B and C omit this, though it seems necessary in the context.
८. B C E: सकल
९. C: अभावमनुभवति
१०. E: विरोधाज्ञान
११. C: वा अज्ञानमिति
१२. C: सुषुप्तानुभूत
 E: सुषुप्तावनवभूताज्ञानानुभवानुभूत
१३. E: मर्श्यते
१४. C: शिष्यते
१५. E omits ज्ञान
१६. C omits एव
१७. E: सुषुप्ते
१८. E: अनुभवानुभवस्य
१९. E: अन्तःकरणमन्तःकरणासंभवात्

असंभवात्, केवलस्वरूपचैतन्यमात्रात्[१] निर्विकल्पकात्[२] असिद्धेः। अज्ञानं पुनः निर्वि[३]कल्पकसाक्षिचैतन्येन सुषुप्तिकाले अनुभूतं उत्तरकालं परामृश्यते[४] इति वैषम्यम्। ननु स्वरूपचैतन्यस्य[५] नित्यत्वात्, अज्ञानस्य च आ संसारविमोक्षात् अविनाशाभ्युपगमात्, अज्ञाना[६]नुभवज[७]नितसंस्काराभावे कथं उत्थितस्य तद्विषयपरामर्शः स्यात्? उच्यते। अज्ञानस्य नित्यत्वेऽपि जाग्रदाद्यवस्थासु विपरि[८]वर्तमानं तत्तदवस्था[९]विशेषसंसृष्टमेव अनुभूयते। तथा[१०] हि—जागरिता[११]वस्थायां 'अहमज्ञः' इति स्फुटतरसवि[१२]कल्पकानुभवेन सुखादिवदनुभूयते। स्वप्ने पुनः तद्गतहस्त्यादिवत् बाधयोग्यतया अनुभूयते। सुषु[१३]प्तौ तु सर्वस्य[१४] सविकल्पकज्ञानस्य उपरमात् केवलसंस्कारानु[१५]रञ्जितं अज्ञानं अनुभूयते। अतो जागरितावस्थायां तथाविधावस्थासंसर्गाव्यभिचारात् भवत्येव अज्ञाना[१६]नुभवजनित[१७]संस्कारः। ततश्चोत्थितस्य तत्प[१८]रामर्शो युज्यत एव।

ननु—उत्थितस्य 'एतावन्तं कालं न किञ्चिदवेदिषम्' इत्ययं परामर्शो न भवति; किं तु प्राचीनस्यैव ज्ञानाभावस्य[१९] अयं प्रबोधकालेऽनु[२०]भवः; यथा प्रातःकालीनस्यैव चत्वरादौ गजाभावस्य सायंकाले अनुभवः 'प्रातः चत्वरादौ गजो नासीत्' इति; एवं सुषुप्तिकालीनस्यैव ज्ञानाभावस्य[२१] प्रबोधसमये अनुभवः—इति। तदेतद्-

---

१. E: मात्रं
२. C: दिसिद्धेः
E: कारसिद्धेः
३. C: निर्विकेवल
४. E: मर्श्यते
५. E: चैतन्यनित्यत्वात्
६. E: अज्ञानाभाव
७. B omits जनित
८. A E: वर्तमानं
९. B omits वि
१०. C omits तथा हि
११. C: जाग्रदव
E: जाग्रदाद्यव
१२. All except C and E read विकल्पक
१३. E: सुषुप्ते
१४. B: सर्वसविकल्पक
१५. C omits अनु
१६. C omits अज्ञान
१७. E: जनितासंस्कारः
१८. C omits तत् and reads परामर्शोऽपि
१९. B inserts एव
२०. All except C give कालानुभवः
२१. C: भआवस्थायं प्रबोधकाले

युक्तम्, प्रातःकालीनस्य गजाभावस्य तदानीमेव धर्म्य[1]नुभवात् तत्परामर्शेन सायंकाले प्रतियोगिस्मरणेन गजाभावानुभवो युक्तः[2]। इह पुनः सुषुप्तावस्थायां धर्म्यादिसमस्तवस्तु[[3]ग्रहणाभावे सति तत्र[4] कुत्र अभावं प्रबोधकाले प्रतिपद्येत[5]? अतो नायमभावानुभवः। अस्तु तर्हि ज्ञानाभावानुमानम्। तथा हि—सुषुप्तिकाले न किञ्चिन्मया अनुभूतम्, अस्मर्यमाणत्वात्, यद्[6]न्न स्मर्यते तत्तन्नानुभूतम्[7], यथा सप्तमरसः, तथा च सुषुप्तिकालीनवस्तु] न किञ्चिदपि स्मर्यते, तस्मात् तदा न किञ्चिदनुभूतम्—इति। तदप्यपेशलम्, हेतोरनैकान्तिकत्वात्। न ह्यनुभूते[8] वस्तुनि स्मृतिनियमोऽस्ति, वेगेन धावतो मार्गवर्तिपर्णतृणाद्यनुभवेऽपि पुनः तद[9]नुस्मरणादर्शनात्। अथ[10] 'नियमेन अस्मर्यमाणत्वात्' इति हेतुं विशिष्यात्[11], तदापि[12] निर्विकल्पकवि[13]ज्ञानानुभूतपदार्थे[14] व्यभिचारः। तस्मात् अस्मरणलिङ्गेन ज्ञानाभावानुमानमयुक्तम्। न च [15]लिङ्गान्तरमुपलभामहे। न चायमुत्थितस्य अज्ञानपरामर्शो विभ्रमः, बाधानुपलम्भात्। तस्मात् उत्थितस्य अज्ञानपरामर्शान्यथानुपपत्त्या भावरूपमेवाज्ञानं[16] [[17]सुषुप्तौ अनुभूतमिति निश्चीयते। अनुमानं च भवति—विवादगोचरापन्नः [18]सुप्तोत्थितस्य अज्ञानपरामर्शः भावरूपविषयो [19]भवितुमर्हति, भावप्रमाणगोचरवस्तुविषयत्वात्, घटादिपरामर्शवत्—इति।

---

१. E: धर्मानुभवं
२. C: युक्तम्
३. E omits the part within brackets
४. B: तस्य ; C omits तत्र
५. A: प्रतिपाद्येत
६. B: यन्न स्मर्यते तन्नानु
७. C: भूयते
८. E: अनुभूतवस्तुनि
९. B C: तदस्मरणदर्शनात्
E: पुनः स्मरणदर्शनात्
१०. A: अन्यथा
११. A D E: विशिष्यात्
१२. D: तथापि
१३. C omits वि
१४. E omits पदार्थे
१५. C: ज्ञानाभावस्य लिङ्गा
१६. B: रूपमेवानुभूतमिति
१७. E omits the portion within brackets.
१८. Some portions of this anumāna are missing from B.
१९. C omits भवितुमर्हति

अपि[1] च जागरितावस्थायामपि अज्ञातार्थप्रश्नान्यथानुपपत्त्या भावरूपमज्ञानं] गम्यते। तथा हि। कश्चित् स्वयमज्ञातमर्थं तदभिज्ञमन्यं पुरुषं पृच्छति—कीदृशोऽयमर्थः[2]? मया असौ न ज्ञायते—इति। तत्र यदि ज्ञानाभावमेव अज्ञानं तदा सुषुप्तत्वादर्थस्य तदनुवादेन[3] प्रश्नोऽनुपपन्नः। न ह्यप्रतिपन्ने अर्थे अनुवादो[4] घटते। अथ सामान्यरूपेण[5] अवगम्य[6] तमर्थमनूद्य तद्विशेष[7]प्रश्नः इत्युच्येत[8], तदेतन्निरूपणीयम् 'किं सामान्यविशेषौ भिन्नौ, उत अभिन्नौ, आहोस्वित्[9] भिन्नाभिन्नौ?' इति। आद्ये कल्पे[10] सामान्यस्य अवगतत्वात्, तत्र[11] बुभुत्साभावात्, विशेषस्य च अर्थान्तरत्वात्, तस्य च सुषुप्तत्वात्[12], तदनुवादेन[13] प्रश्नासंभवात्, लोके प्रश्न[14]प्रतिवचनादिव्यवहारः अस्तं इयात्। अथ विशेषोऽपि सामान्याकारेण[15] अवगतः इति मतम्[16], तदाप्यवगतेंऽशे[17] बुभुत्साभावात्, अनवगतांशस्य[18] सुषुप्तत्वात्, तदनुवादेन प्रश्नानुपपत्तेः[19], तदवस्थ एव दोषः। अथ सामान्यविशेषावभिन्नौ; तदा सामान्यावगमेनैव विशेषस्यापि[20] अवगतत्वात् न विशेषांशे[21] बुभुत्सा, नापि प्रश्नावसरः। अथ—सामान्यविशेषयोः भिन्नाभिन्नत्वात् सामान्यावगमेनैव तदभेदात् विशेषोऽप्यवगतः; ततश्च[22] विशेषानुवादेन प्रश्नोपपत्तिः; भिन्नत्वाच्च विशेषस्य तद्विषयबुभुत्सापि संभवति; अतो न[23] काचिदनुपपत्तिः—इति मन्येत[24], तदापि वक्तव्यं

---

१. B omits अपि
२. E: यमायासो न
३. B: अनुवादोऽनुपपन्नः
४. C: तदनुवादो
५. C: मात्रेण for रूपेण
६. C: अवगतमर्थमनूद्य
E: गम्यते, तदर्थमनूद्य
७. C: विशेषविषयप्रश्नः
८. E: उच्यते
९. A E drop this third vikalpa; C: उत for आहोस्वित्
१०. C: पक्षे
११. C: तद्बुभुत्साया अभावात्
१२. C: प्रसुप्त
१३. B omits a few lines up to अवगतेंऽशे
१४. C: प्रश्नव्यवहारो
१५. E: सामान्यकारणावगत
१६. E omits मतम्
१७. C: अवगतैकदेशे
१८. C adds च, E: गतान्तस्य
१९. E: प्रश्नोपपत्तेः
२०. C: विशेषांशस्यापि
२१. C adds अपि
E: विशेषांशेऽपि प्रश्नावसरः
२२. E omits ततः
२३. E omits न
२४. E: मन्यते

‘किं[1] भिन्नरूपमेव अभिन्नरूपं आहोस्वित् ततो रूपान्तरम्?’ इति। यद्याद्यपक्ष[2]-कक्षीकारः तदा विशेषस्य अवगतिः अन[3]वगतिर्वा[4] स्यात्, नोभयसिद्धिः, रूपद्वया-भावात्। अथ[5] अर्थान्तरम्, तदा[6]प्यनवगतिरेव; न तत्र बुभुत्सा, नापि प्रश्नावकाशः। अनवगतरूपस्य अवगतरूपादन्यत्वात् तस्य च सुषुप्तत्वात् तदनुवादेन प्रश्नो नैतरां[7] उपपद्यते। तस्मात् ज्ञानाभाव एव चेत् अज्ञानं प्रश्नप्रतिवचनादिलौकिक[8]व्यवहारः[9] प्रलयं[10] गच्छेत्।

ननु भावरूपमप्य[11]ज्ञानं विषयावभासविरोधित्वेनैव[12] भवद्भिः अभ्युपगम्यते[13]; तत्र कथं भवतामप्यज्ञातेऽर्थे[14] प्रश्नादिव्यवहारः? उच्यते। अस्मत्पक्षे पदार्थानां[15] द्वयी[16] सिद्धिरस्ति—एका साक्षिसिद्धिः, अपरा प्रमाणसिद्धिः, इति[17]। तत्र भावरूपमज्ञानं प्रमाणज्ञानविरोधित्वेनाभ्युपगम्यते, न साक्षिचैतन्यविरोधित्वेन। ततः प्रमाणज्ञानोदयात् प्राक् अज्ञानविशिष्टतया सा[18]क्षिसिद्धोऽर्थो ज्ञातः इति व्यवह्रियते। ततश्च अर्थस्य अत्यन्तसुषुप्त्यभावात् अज्ञा[19]तत्वाच्च तस्यां अवस्थायां प्रश्नादिव्यवहारोपपत्तिः। स्वतः परतो वा प्रमाणज्ञाने सञ्जाते स[20]ति अज्ञाननिवृत्तेः अर्थस्य[21] ज्ञातत्वादिव्यवहारः बुभुत्सानिवृत्तिश्च इति सर्वं[22] सुव्यवदातम्।

इति तत्त्वशुद्धौ अज्ञानस्य भावरूपत्वप्रतिपादनप्रकरणम्।

---

१. E omits किं
२. C: यद्याद्यः पक्षः
३. E omits अनवगतिः
४. All except A E read गतिरेव
५. E omits अथ
६. B: तदाप्यवगतमेव तत्; न तत्र
C: तदाप्यवगतमवगतमेव; न तु तत्र
E: तदाप्यवगतमेव; न बुभुत्सा
७. E: न सुतरां
८. B: लौकिको व्यवहारः
९. E: व्यापारः for व्यवहारः
१०. C: प्रलीयेत
११. C omits अपि
१२. C: धित्वे
१३. A C: गतम्; E: गतः
१४. All except B give अज्ञातार्थे
१५. B: पदर्थानन्वये
१६. C: द्वयो गतिः
E: द्वयी सिद्धिरस्ति, अपरा
A B D: द्वितीयसिद्धिः
१७. E omits इति
१८. C: साक्षिचैतन्य
१९. E: ज्ञानत्वाच्च
२०. C omits सति
२१. E: अन्धस्य ज्ञानत्वादि
२२. B C: सर्वमवदातम्

## ॥ अभावसमर्थनं पञ्चविंशम् ॥

भावाभावौ यो विभागेन शश्वत् मायारूढो भासयन् लोकचक्रम् ।
अन्तर्यामी वर्तयत्यद्वयात्मा तं वन्देऽहं नन्दसूनुं सुरेशम् ॥

इदमिदानीं[1] चिन्त्यते ‘किं भाव एव अभावशब्दव्यवहारभाक्[2], आहोस्वित् अभावाख्यं तत्त्वान्तरम्?’ इति। तत्र सांख्याः[3] प्राभाकराश्च मन्यन्ते—न ह्यभावाख्यं तत्त्वान्तरमस्ति, प्रमाणाभावात्। “ननु ‘इह भूतले घटो नास्ति[4]’ इत्यत्र आ स्त्रीबालं प्रतीतिरुपजायते। सा तावत् न घटभाव[5]विषयैव, तत्प्रतीतिविरोधात्[6] घटाभा[7]वोपलंभस्य। नापि भूतल[8]विषया, सघटेऽपि प्रसङ्गात्। अथ केवल[9]भूतलविषया, तदापि वक्तव्यम् ‘किमिदं कैवल्यं नाम किं भूतलमेव, उत[10] तत्त्वान्तरम्?’ इति। यदि भूतलमेव, तदा[11] सघटेऽपि स्यात् इत्युक्तम्। अथ तत्त्वान्तरम्, अङ्गीकृतं तर्हि भवतैव नास्तीति[12] प्रत्ययालम्बनं[13] भूतलादिभाव[14]व्यतिरिक्तं तत्त्वान्तरम्” इति। उच्यते। द्वयी[15] हि[16] भूतलावगतिः। घट[17]संसृष्टविषया एका, अन्या केवलभूतलविषया। [सो[18]पि

---

१. C omits इदमिदानीं चिन्त्यते
२. C: भागी
३. E: स्याख्याः
४. C: नास्तीत्यादावन्तं
   E: नास्तात्यास्त्रीबालं
५. A: घटाभाव
६. B C: विरोधित्वात्
७. All except A C give घटभाव
८. E: भूतविषया
९. E: भूतले केवलविषयां
१०. A E: मेवेदं तत्त्वान्तरम्
११. C omits तदा
१२. C omits इति
१३. E: यावलम्बनं
१४. C: भावव्यतिरिक्तं
१५. E: अन्वयी
१६. A E omit हि
१७. B omits घट
१८. E omits the portion within brackets

द्विधा, दृश्ये प्रतियोगिनि केवलभूतलविषया एका, अपरा तु अदृश्ये प्रतियोगिनि इति। या तावत्[2] तत्र दृश्ये प्रतियोगिनि केवलभूतल[3]विषया] सैव अभावव्यवहारहेतुः, नान्या[4] भूतलमात्रविषया। न च दृश्ये प्रतियोगिनि एकाकिभूतलविषयज्ञानव्यतिरेकेण अभावविषया काचित्प्रतीतिरस्ति येन अभावाख्यं प्रमेयान्तरं प्रतिपद्येम[5]हि। अपि च 'भूतलस्य किमिदं कैवल्यं नाम?' इति पर्यनुयोगः परस्यापि समानः। तथा हि। अभाववादिनोऽपि धर्मिज्ञानपूर्वकं अभावज्ञानं इ[6]ति सम्मतम्। तत्र न तावत् भूतलमात्रविषयं[7] धर्मिज्ञानम्, तदा[8]पि तस्य घटसंसृष्टभूतलेऽपि प्रसङ्गात्। केव[9]लभूतलविषयं चेत्, किं तत्[10] कैवल्यं नाम? भूतलमेव उत तत्त्वान्तरम्? भूतलमेव चेत्, उक्तो दोषः। त[11]त्त्वान्तरं चेत्[12], तदपि भावरूपं अभावरूपं वा? भावरूपं चेत्, अस्तु भावान्तरविशिष्टभूतलविषयं धर्मिज्ञानम्; तदा[13]पि तस्य घटसंसृष्टभूतले प्रसङ्गो न परिहृतः। अथ अभा[14]वरूपं, तदा[15]पि अभावसामग्रीसंपत्तेः प्रागेव अभावग्रहणं वक्तव्यम्। ततश्च आत्माश्रयत्वप्रसङ्गः अभावग्रहणे सत्येव अभावग्रहणम्, इति। अन्योन्याश्रयत्वं वा अभावग्रहणे सत्येव धर्मिज्ञानम्, धर्मिज्ञाने सत्येव अभावज्ञानम्, इति। स्यान्मतम् 'न घटा[16]भावविशिष्टभूतलविषयं धर्मिज्ञानं, अपि तु भूतलस्य यदसाधारणरू[17]पं तद्विषयमेव' इति, तर्हि दृश्ये प्रतियोगिनि तथाविधभूतलस्वरूपज्ञानमेव[18] अभावव्यवहारहेतुः इति न अस्मत्पक्षेऽपि कश्चित् विरोधः। ना[19]पि अभावप्रमाणप्रमेयकल्प-

---

१. C omits up to या तावत्
२. C: च for तावत्
३. C omits भूतल
४. E: न भूतलमात्रविषयापि
५. C: पद्येत
६. E: इह
७. C: विषयधर्मि
८. B C omit तदापि तस्य
९. E: केवलविषयैव कैवल्यं नाम भूतल etc.,
१०. C omits किं तत्
११. C: तथा तत्त्वान्तरं
१२. E: इति चेत्
१३. A D E: तथापि
१४. C: भाव
१५. A D E: तथापि
१६. B: घटभावाभाव
१७. B C: स्वरूपं
१८. C omits एव
१९. E: न हि

नावकाशः। अनयैव दिशा कण्टकाद्यभावनिश्चयेनैव पदविन्यासादि[1]व्यवहारोऽपि योज्यः। तस्मात् भाव एव अभावव्यवहारः, न अभावाख्यं तत्त्वान्तरम्—इति।

अत्राभिधीयते। न खलु अभावाख्यं तत्त्वान्तरमपलपितुं शक्यम्, तच्छब्द-प्रत्यययोः निरालम्बनत्वप्रसङ्गात्। न च तच्छब्दप्रत्ययौ न स्तः, 'इह भूतले घटो नास्ति' इत्यादिशब्दप्रत्यययोः अखिलजनप्रसिद्ध[2]त्वात्। ननु तौ[3] दृश्ये प्रतियोगिनि भूतलमात्रविषयावेव इत्युक्तम्। तर्हि भावशब्दप्रत्यययावपि घटविषयौ तथैव स्याताम्। अथायमभिप्रायः—घटसंवेदनेनैव घटसद्भावनिश्चयात् तदपलापे[4] तत्संवेदनविरोधो भवेत्[5]—इति, तर्हि घटाभावसंवेदनेनापि अभावस्वरूपनिश्चयात् तदपलापे तत्संवित्ति-विरोधः समान एव। किं[6] बहुना? भावसंवित्त्या चेत् पदार्थसत्तानिश्चयः, तथैव अभावसंवित्त्यैव अभावोऽपि प्रतीयमानो न अपलपितुं शक्यः। तथा चायं प्रयोगः—'इह भूतले घटो नास्ति' इति व्यवहारः धर्मि[7]भूतलातिरिक्ततद्गतविशेषणज्ञान-निबन्धनो[8] भवितुमर्हति[9], भूतले सविशेषव्यवहारत्वात्, यो[10] भूतले [[11]सविशेषव्यवहारः स भूतला]तिरिक्ततद्गतविशेषण[12]ज्ञानपूर्वको दृष्टः, यथा 'इह[13] भूतले घटोऽस्ति[14]' इत्यादिव्यवहारः, तथा[15] चायमुक्तसाधनो 'घटो नास्ति' इत्यादिव्यवहारः, तस्मादुक्त-साध्यः—इति। न च वाच्यम्—'घटो नास्ति' इत्यादिव्यवहारस्य भूतलमात्रविषयत्वा[16]-भ्युपगमात् 'सविशेष[17]व्यवहारत्वात्' इत्ययं हेतुः अन्यतरासिद्धः—इति। विमत्या[18]-

---

१. B E drop आदि
२. B: प्रसिद्धत्वप्रसङ्गात्
C: सिद्धत्वात्
३. A D omit तौ
४. E: लापः
५. E: भवति
६. A: किं च यथा भावसंवित्त्यैव पदार्थ-सत्ता
७. C omits धर्मि
८. B: निबन्धन इति साध्यो धर्मः
९. C omits भवितुमर्हति
१०. C omits up to यथेह भूतले
११. E leaves out the part within brackets
१२. E: विशेषकं न ज्ञानपूर्वको
१३. E omits इह
१४. A E wrongly read नास्ति
१५. C: तथा चायं तस्मात्तथेति
१६. E: विषयाभ्युप
१७. B: सविशेषण
१८. E: विमत्यापन्नघटाभावव्यवहारभूतल-मात्रालंबनो

पन्नो भूतले घटाद्यभावव्यवहारो भूतलमात्रालम्बनो न भवितुमर्हति[1], भूतले वस्त्वन्तर-प्रतियोगिकव्यवहारत्वात्, घट[2]भावव्यवहारवत्, इति सविशेषालम्बनत्वानुमानात्।

यत्पुनरुक्तम्—अभावज्ञानात् प्राग[3]भावधर्मित्वेन यादृशं[4] भावाभावविनिर्मुक्तं भूतलं अभाववादिनोऽभिप्रेतं तादृशभूतले दृश्ये प्रतियोगिनि गृहीते सति अभाव-व्यवहारोऽस्तु—इति, तदेतद[5]युक्तम्। अस्मत्पक्षे भावाभावविनिर्मुक्तभूतलस्य धर्मित्वेन[6] ग्रहणमुप[7]कल्पते, न भवतां तथाविधभूतलग्रहणं संभवति। तथा हि—घट[8]स्य प्रागुत्पत्तेः प्रध्वंसादूर्ध्वं च घटाभावव्याप्तत्वात् भूतलस्य न ताव[9]त् घटसंसृष्टभूतल-ग्रहणम्; नाप्यभावविशिष्टस्य भूतल[10]स्य परिच्छेदः, अभा[11]वस्य प्रमाणान्तरगम्यत्वात्। तदेवं भूतलस्य घटाभावव्याप्ततया न घटसंसर्गः। अभावस्य भूतलगतस्याप्ययोग्य-त्वात्, न भूतलेन तुल्योपलंभत्वम्। अतः शुद्धस्यैव[12] भूतलस्य ग्रहणमवकल्पते। भवतां पुन[13]ः भूतलस्य स्वरूपेण घटसंसर्गविरोधः, सर्वदा भूत[14]ले घटाभावप्रसङ्गात्। नाप्यभाव इष्टः। अत[15]ः कदाचिदपि भूतलस्य घटसंसर्गविरोधाभावात् घटभूतलयोः तुल्योपलंभ[16]-योग्यत्वाच्च[17] न ऐ[18]काकिभूतलग्रहणमवकल्पते।

स्यादेतत्—घटप्रध्वंसा[19]दूर्ध्वं भूतलस्य कपालमालाव्याप्तत्वात्, तस्याश्च घट-संसर्गविरोधात्, न घटसंसृष्टभूतलग्रहणप्रसङ्गः; प्रागुत्पत्तेश्च पिण्डादिव्याप्तत्वात्,

---

१. C: न भवति
२. A: घटाभाव
३. E: भाव
४. C: प्रागेव यादृशं
५. C: तदयुक्तम्
६. E: सम्मितत्वेन
७. B: अवकल्पते
८. C omits घटस्य
९. B omits तावत्
१०. C omits भूतलस्य
११. B: भावस्य
१२. C omits एव
१३. C: पुनर्न
१४. B omits भूतले
१५. C drops अतः
१६. C drops उपलंभ
१७. E omits च
१८. B: नैकान्तिक
१९. C: प्रध्वंसानन्तरम्; E: ध्वंसादूर्ध्वं

तस्य च[1] घटसंसर्गविरोधात्, न तत्रापि प्रसङ्गः; यत्र च सन्नपि घटो देशान्तरं नीयते, तत्रापि देशान्तरसंसर्ग एव अन्यदेशसंसर्गविरोधि इति न क्वापि घटसंसृष्ट-भूतलग्रहणप्रसङ्ग[2]ः—इति। तद[3]पि असमीक्षापूर्वकमेवोत्प्रेक्षितमुत्पश्यामः। यत्र कपालमालासंसर्गः तत्र घटसंसर्गो मा भूत्; अन्यत्र घटसंसर्गः किं न भवेत्? अभावानभ्युपगमे सति किमिति वा न गृह्येत[4]? तथा प्रागुत्पत्तेरपि पिण्डा[5]दिव्याप्त-देशादन्यत्र घ[6]टसंसर्गसद्भा[7]वः तद्ग्रहणं च[8] दुर्निवारमेव प्रसज्यते[9]। तदेवं एकाकिभूतल-ग्रहणस्य भवतां[10] असंभवात् दृश्ये[11] प्रतियोगिनि केवलभूतलग्रहणे सति अभावव्यवहारः इत्ये[12]युक्तमुक्तम्। तस्मात् अभावाख्यं तत्त्वान्तर[13]मिति सिद्धम्।

इति तत्त्वशुद्धौ अभावसमर्थनप्रकरणम्।

---

१. C omits च
२. E omits ग्रहण
३. B: तदप्यसत्; C: तदप्यसमीक्षितमेवोत्प्रेक्षितम्
४. A E: गृह्यते
५. C: मृत्पिण्डादि
६. E: घटसद्भावग्रहणं
७. B: घटसंभवस्तद्ग्रहणं
८. C omits च
९. C omits प्रसज्यते; E: प्र....मेकाकि
१०. C: भवतोऽसंभवात्
११. E: दृश्यते
१२. E: इत्युक्तम्
१३. C: तत्त्वान्तरमस्त्येवेति।

## ॥ भेदनिराकरणं षड्विंशम् ॥

नेहास्ति नानेति निवार्य भेदं सदेकमेवेति यमेकमाह ।
[1]श्रुतिर्निरस्तातिशयाव[2]बोधं नतो[3]ऽस्मि तं विष्णुमनन्य[4]भावः ॥

संप्रति विचार्यते 'किं भेदो नाम वस्तुस्वरूपमेव [5]आहोस्विदर्थान्तरम्?' इति । तत्र सांख्या[6]दयो मन्यन्ते—[7]द्विविधो भेदः । एकस्तावत् पदार्थानां अन्योन्यं सामानाधिकरण्यतायोग्यतालक्षणः, [8]यथा रजतादेः शुक्तिका[9]दिसंसर्गायोग्यतालक्षणः ; स च[10] [[11]पदार्थधर्म एव ;] पदार्थस्वरूपेऽवगतेऽपि तद्गतधर्मविशेषावगमेन विना च नावगम्यते । एकस्तु पदार्थानां असङ्करलक्ष[12]णः ; स तु [पदार्थस्वरू[13]पमेव ; तदवगतिश्च] पदार्थस्वरूपावगतिरेव । ननु "'अयं अस्मात् भिन्नः' [14]इति धर्मिप्रतियोग्यपेक्षो भेदः ; तद्ग्रहणं च धर्मिग्रहणाद्यपेक्ष[15]म् ; न तु घटादिस्वरूपं प्रतियोग्या[16]द्यपेक्षम्, नापि तद्ग्रहण[17]म् ; [18]कुतस्तत्र पदार्थस्वरूपमेव भेदः ? कुतो वा [19]अनयोः एकज्ञानवेद्यत्वम् ?"

---

१. E: श्रुतिं
२. C: शयात्मबोधं
३. B: नमामि
४. C: भावम्
५. C: उत तत्त्वान्तरं
६. C: सांख्या मन्यन्ते
७. E: विविधो
८. C drops this dṛṣṭānta and a part of the following up to अवगते तद्गतधर्म
९. A E omit आदि
१०. B omits च
११. E omits the words within brackets.
१२. C: रूपः for लक्षणः
१३. C omits the portion within brackets.
१४. C omits इति
१५. E: अपेक्षेण तु
१६. C omits आदि
E: पेक्षेणापि
१७. C: तद्ग्रहणं धर्मिग्रहणाद्यपेक्षम्
१८. B: ततस्तत्र
१९. C: तयोः

इति। उच्यते। न तावत् भेदस्य धर्मिप्रतियोग्यपेक्षा, रूपरसादि[1]स्वरूपस्यैव भेद[2]त्वात्, तस्य च प्रतियोग्याद्यनपेक्षणात्। असङ्करो हि भेदः[3]। स च रूपस्य रूपात्मनैव रसादेः[4] सिद्धः। न हि रूपरसयोः स्वरूपव्यतिरेकेण धर्मान्तरापेक्षोऽसङ्करः[5] प्रतिभाति; तयोः स्वरूपस्यैव असङ्करात्मनैव[6] अवभासनात्[7]। या तु[8] तत्र धर्मिप्रतियोग्यपेक्षा सा तत्र भेदशब्दप्रयोगनिबन्धना। तथा हि। रूपरसादिशब्दास्तावत रूपरसादौ तत्स्वरूपमात्रनिमित्ताः[9] प्रयुज्यन्ते[10]; भेदादिशब्दास्तु तत्रैव बुद्धिसन्निधापितपदार्थान्तरोपाधिमपेक्ष्य। यथा वृक्षादिषु वृक्षादिशब्दाः तत्[11]स्वरूपमात्रापेक्षया प्रयुज्यन्ते, वनादिशब्दास्तु तत्र[12] चैकदेशावस्थानाद्युपाध्यपेक्षया। [तत[13]श्च धर्मिप्रतियोग्यपेक्षायाः] भेदशब्दप्रयोगनिबन्धनत्वात्, स्वरूपातिरिक्तभेदे[14] प्रमाणाभावात्, निर्विकल्पक[15]विज्ञानेऽपि रूपरसादिस्वरूपस्यैव असङ्करा[16]त्मना अवभासनात्, वस्तु[17]स्वरूपमेव भेदो न अर्थान्तरम्—इति।

तत्र[18]ेदमाचक्ष्महे। यदि कश्चित् पदार्थानां धर्मभूतो भेदः प्रतिभासते[19], प्रतिभासताम्; न तत्प्रतिभासो निराक्रियते, यावत्प्रपञ्चावभासं[20] भेदस्यैवाभीष्टत्वात्[21]। यत्तु

---

१. C: रूपमादि
२. E: भेदात्
३. E: भेदस्वरूपस्य
४. C: रसात्सिद्धः
५. E: पेक्षा रूपस्यैव भेदे तत्र शब्दप्रतियोगिनिबन्धना; thus a few phrases are missing; C: धर्मान्तरं पक्षोऽसङ्करः
६. B C drop एव
७. C: अवभासात्
८. A omits तु
९. C: रसादिस्वरूपनिमित्ताः
१०. E: प्रतियुज्यते
११. C omits तत्
१२. B C: तत्रैवैकदेश
१३. E omits the words within brackets.
१४. E: भेदप्रमाण
१५. A: निर्विकल्पज्ञाने
E: निकल्पक
१६. C: सङ्करा
१७. C omits वस्तु
१८. C: अत्र
१९. C: भासेत
२०. C omits अव
२१. A D: अपीष्टत्वात्

घटादिस्वरूपमेव भेदः इति परिकल्पनम्[1], तन्न घटामुपैति[2], [3]प्रतीतिविरोधात्, व्यवहाराभावप्रसङ्गात्, भेद[4]ाभावप्रसङ्गाच्च। तथा हि। 'शुक्लो घटः' इतिवत्[5] 'भिन्नो घटः' इति घटधर्मत्वेनैव[6] भेदः प्रतिभासते, न तु[7] 'भेदो घटः' इति घटस्वरूपत्वेन। अतो भेदघटयोः धर्मधर्मित्वेन[8] प्रतीतेः आ बालपण्डितं प्रसिद्धत्वात्, प्रसिद्धेः बाधाभावात्, तदपलापे[9] सर्वप्रतीत्यपलापप्रसङ्गाच्च भेदस्य वस्तुस्वरूपे[10]कल्पना सकललौकिक[11]प्रतीतिविरुद्धा[12]। किं च भेदो घटा[13]दिस्वरूपमेव चेत्, भेदघटादिशब्दानां पर्यायत्वप्रसङ्गः। तथा सति 'घटो भिन्नः, [14]पटो भिन्नः' इति भेदशब्दस्य अनेकैः [15]घटपटादिशब्दैः सह प्रयोगो न स्यात्। तत[16]श्च शब्दार्थव्यवहारः अस्तमियात्। तत्र यदुक्तम् 'वृक्षवनादिशब्दा[17] इव वृक्षेषु स्वरूपपररूपोपाधिनिमित्तौ घटभेदशब्दौ[18] वर्तेते' इति, तदसत्। एकदेशावस्था[19]नादिधर्मविशिष्टाः[20] किल वृक्षवनादिशब्दाभिधेयाः, स्वरूपेण वृक्षादिशब्दवाच्या इत्यस्त्येव कियानर्थभेदः। ह्रस्वदीर्घादिशब्दाः पुनः न्यूनाधिकदेशकालव्याप्ति[21]धर्मनिबन्धनाः वृक्षादिषु प्रयुज्यन्ते; न तत्स्वरूपमात्रनिबन्धना एव। तथा पित्रादिशब्दाश्च पुरुषादिषु जननादिसम्बन्धप्रयुक्ताः प्रवर्तन्ते। सर्वथापि तु अपर्यायशब्दानां वाच्यार्थभेदः अपरिहार्य एव। ततश्च भेदघटादि-

---

१. C: कल्पितं
२. C omits घटामुपैति ; E: घटादिमुपैति
३. E drops प्रतीति
४. A E omit भेदाभावप्रसङ्गात्
५. B: इति वा
६. C omits एव
७. All except C give च for तु
८. A C E: धर्मधर्मित्वप्रतीतेः
९. E adds सर्वत्र
१०. C: स्वरूपत्व
११. B C: लोक
१२. E omits प्रतीति•
१३. C drops आदि
१४. C omits पटो भिन्नः
१५. A: अनेकैकघट
१६. A omits च
१७. C: शब्दाविव
१८. A E: शब्दौ घटस्वरूपे वर्तेते
१९. A E: देशोऽवस्था ; C: एकदानेकदेशावस्थान
२०. Here E introduces a portion from the 23rd Chapter: धर्मिकालव्यवहितं up to नापि भेदस्यात्यन्तापह्नवः
२१. B C: व्यापित्व

शब्दयोः वाच्यार्थभेदाभावे सति पर्यायत्वात् अनेकैः भिन्नार्थशब्दैः सहप्रयोगानुपपत्तेः शब्दार्थव्यवहारोऽनुपपन्नः स्यात् इति व्यवहारान्यथानुपपत्त्या घटादिस्वरूपात् अर्थान्तरं भेदः इति निश्चीयते। तथा[3] चानुमानम् 'विवादगोचरापन्नो भेदशब्दवाच्यो घटशब्दवाच्यात् अर्थान्तरं भवितुमर्हति[4], तदपर्यायशब्दवाच्यत्वात्, घटादिशब्दवाच्यवत्' इति। भेदशब्दो[5] धर्मिघटपर्यायो न भवितुमर्हति[6], घटादिशब्दसामानाधिकरण्येनापि प्रयुज्यमानत्वात्, शुक्लादिशब्दवत्।

अपि च भेदस्य घटादिस्वरूपमात्रत्वे घटादेः अविदारणात्मकत्वात् लोके विदारणरूपो[7] भेदो न सिध्येत्। ततश्च अन्योन्यानात्मतालक्षणवस्त्वसङ्करासिद्धेः[8] [9] अद्वैतवाद एव भवतापि[10] सूक्ष्मेक्षिकां कुर्वता समर्थितः स्यात्। घटादेर्वा भेदमात्रत्वे भेदस्य विदारणात्मकत्वात् एको घटो न सिध्येत्। तथा तदंशांशो[11] वैको घटो[12] न सिध्येतीति[13] शून्यं जगदभविष्यत्।

अथ मतम् 'भेदात्मना एकबुद्धिबोध्यत्वात् भेदात्मकत्वेऽपि घटादेः एकत्वमविरुद्धम्[14]' इति, तर्हि इदं ब्रूहि 'किं समस्तजगदुदरवर्ती एक एव भेदः, किं वा अनेकः?' इति। यद्याद्यः कल्पः तदा भेदस्य एकत्वात् तावन्मात्रत्वाच्च[15] सर्वस्य

---

१. C: शब्दव्यव
२. B adds अपि
३. C: अनुमानं च भेदो घटशब्दवाच्यात् etc.
४. C omits भवितुमर्हति
५. C: भेदशब्दो न घटपर्यायः पटादिशब्दसामानाधिकरण्य etc.
६. A: न भवति
७. B: स्वरूपो
८. C: आत्मकत्वलक्षण·; B: आत्मतालक्षण
९. B: वस्त्वन्तरा-
१०. A C omit अपि
११. C: तदंशस्तदंशोऽप्येका
१२. A omits घटो
१३. C: सिध्येदिति
१४. A: असिद्ध
१५. C: तन्मात्र

वस्तुजातस्य पुनरपि[१] अद्वैतवादसमाश्रयणमेव स्यात्। अथ अनेके भेदाः, तदापि[२] तेषामनेकत्वं एकं चेत्, तन्मात्रत्वे[३] सर्वभेदानां अद्वैतवादप्रसङ्गः; अतावन्मात्रत्वे[४] च[५] भेदभेदिनोर्भेदप्रसङ्गः। ततश्च घटादिभेदोऽपि[६] घटादिस्वरूपादर्थान्तरमेवेत्यापतति। तस्मात् सर्वलोकानुभवविरोधाच्च[७] शब्दार्थव्यवहारानुपपत्तेः अद्वैतवादस्य[८] शून्यवादस्य वा प्रसङ्गात्[९] घटादिस्वरूपमेव भेदः इतीयं[१०] कल्पना न विवेकिजनमनोऽनुकूला; किं तु घटादिस्वरूपात् अर्थान्तरभूतो धर्मिप्रतियोग्यपेक्षश्च भेदः प्रमाणानावसेयोऽपि यावदैकात्म्यबोधं साक्षिवेद्यतया अवभासते इति न स्वरूपभेदकल्पनावकाशः[११]। नापि भेदस्य अत्यन्तापह्नवः[१२]।

यत्पुनरुक्तम् 'निर्विकल्पविज्ञानेऽपि[१३] भेदोऽवभासते' इति तत्र वक्तव्यं 'किमिदं निर्विकल्पकज्ञानं विवक्षितम्[१४]?' इति। यदि तावत् विकल्पः[१५] शब्दः, तद्रहितं[१६] बालमूकादिविज्ञानं[१७] निर्विकल्पकमित्युच्यते[१८], तदा तेषां तद्वाचकशब्दापरिज्ञानेऽपि[१९] 'अयमस्मात् भिन्नः' इति धर्मिप्रतियोगिविज्ञानसंभवात् तदपेक्षभेदप्रतिभासेऽपि न कश्चित् विरोधः। अथ विकल्पो भेदः, तद्रहितं प्रथमाक्षसन्निपातजं विज्ञानं निर्विकल्पकम्, इत्यभिप्रायः, तदा भेदस्फुरणरहिते[२०] विज्ञाने भेदोऽवभासते

---

१. B: पुनरद्वैतवादः समाश्रयणीय एव स्यात्
२. C: तथापि
३. C: तावन्मात्रत्वात्
४. B: अथ तावन्मात्रत्वे
५. C: अपि for च
६. C omits अपि
७. B C omit च
८. B adds वा
९. C adds च
१०. C: इति न घटते; किं तु
११. C: भेदावकाशः
१२. C: अत्यन्तमप
१३. C: ज्ञान for विज्ञान
१४. C omits विवक्षितमिति
१५. A E omit the visarga after विकल्प
१६. E: तत्र हि बाल
१७. C omits वि
१८. C: उच्यते
१९. C omits तत्
२०. C: भेदरहितविज्ञाने

इति विरुद्धभाषित्वं[1] निर्व्यलीकानां आपद्यते[2]। तस्मात् न वस्तुस्वरूपं भेदः इति[4] सूक्तम्। तस्मात् अनिर्वचनीयाविद्यात्मको भेदो यावदैकात्म्यबोधमवभासमानो न केनचित् प्रत्याख्यातुं शक्यते इति।

इति तत्त्वशुद्धौ भेदनिराकरणप्रकरणम्।



१. A: भाषित्वात्
E: भाषितत्वात्

२. C: निर्व्यलीकमापद्यते

३. A: आपद्येत

४. C E omit सूक्तम्; C closes the chapter with इति

## ॥ असत्कार्यवादनिराकरणं सप्तविंशम् ॥

श्रुतिः सदेवा[1]खिलमग्र आसीदिति स्वयं प्राह जनेश्च[2] सत्त्वम् ।
कार्यप्रपञ्चस्य यदा[3]त्मनैव नमोऽस्तु तस्मै हरये परस्मै ॥

संप्र[4]ति विचार्यते ' किं प्रागुत्पत्तेः असत् कार्यम्, आहोस्वित् [5]असद्विलक्षणम्?' इति । तत्र कार्यं प्रागुत्पत्तेः असत् भवितु[6]मर्हति, योग्यत्वे सत्यनुपलभ्यमानत्वात्, [[7]आकाशकुसुमवत् । न च कार्यं प्रागुत्पत्तेः अयोग्यमिति शक्यं वक्तु[8]म्, तदापि तस्य सत्त्वात्, कारणाविनाभावाच्च । कारणस्य चो[9]पलभ्यमानत्वात् ] सतः कार्यस्य कारणोप[10]लंभे सति अनुपलंभासंभवात् । ततश्च घटादिकार्यस्य प्रा[11]गुत्पत्तेः सत्त्वे सति स्वकारणेन मृदादिना उपलभ्यमानेन स[12]ह सदैवोपलब्धिः स्यात् । न चैवमुपलभामहे । तस्मात् असदेव कार्यं प्रागुत्पत्तेः इति नि[13]श्चीयते ।

अपि च [14]जन्मनः प्रागपि घटादिकार्यस्य सत्त्वे कुलालादिकारकव्यापारवैयर्थ्यं [15]स्यात् । कार्यस्य सत्त्वा[16]य हि[17] कारकव्यापारः ; तच्चेत् प्रागेव सत्, किंविषयः

---

१. E: सदेवोऽखिल
२. B: जनैश्च ;
   C: जनश्च
३. E: तदात्मनैव
४. C: इदं इदानीमालोच्यते
५. A E: सदसद्विलक्षण ;
   C: असिद्ध
६. C omits भवितुमर्हति
७. E drops the portion within brackets
८. C: गदितुम्
९. C omits च
१०. A: णोपालंभे
    E: कारणोपलभ्यसंभवात् । ततश्च
११. B C omit प्रागुत्पत्तेः
१२. A omits सह
    B: सहसर्वदैव
१३. C omits निश्चीयते
१४. C: यदि जन्मनः प्रागपि घटादिकार्यस्य सत्त्वं
१५. E omits स्यात्
१६. E: सत्त्वाच्च
१७. B omits हि

पुनः कारकव्यापारः स्यात्? अथ सतोऽपि कार्यस्य अभिव्यक्तये कारकव्यापारः, न[1] सत्त्वाय इति शङ्केथाः[2], तदपि दुरुपपादम्[3], अभिव्यञ्जकवैषम्यात्। अभिव्यञ्जको ह्यादित्यादिः स्वविषयरूपादीन्[4] स्वगोचरदेशस्थान् युगपत् अविशेषेण अभिव्यनक्ति। तथा कुलालादिव्यापारोऽपि यदि मृदादिविषयो घटाद्यभिव्यञ्जकः[5], तदा स्वगोचरमृदादिगतं समस्तं[6] घटशरावादिकार्यजातं[7] युगपदेव अभिव्यञ्जयेत्[8]। न हि तथा[9] दृश्यते।

अपि च प्रागुत्पत्तेरपि कार्यस्य[10][11] सत्त्वे निश्चिते सति कारकव्यापारोऽभिव्यञ्जकः अभिगम्येतापि; अनिश्चिते तु सत्त्वे, यदन्वयव्यतिरेकानुविधायि कार्यस्य सत्त्वं दृश्यते, तस्य तदेव सत्त्वनिमित्तमिति[12] राजमार्गः।

अपि च प्रागुत्पत्तेः कार्याभिव्यक्तिरपि सती[13] किं वा असती इति विकल्पनीयम्। यदि[14] सती तदा कार्याभिव्यक्तये[15] कारकव्यापारो न स्यात्। अथ[16] असती, तर्हि यथा[17] तस्याः प्रागुत्पत्तेः अविद्यमानाया एव जन्मना सत्त्वमिष्यते[18], तथा कार्यस्यापि[19] भवितुमर्हति। तदेवं[20] प्रयोगः 'विमतिपदं कार्यं प्रागुत्पत्तेः असत् भवितु-

---

१. A E omit न

२. C omits शङ्केथाः

३. C: न for दुरुपपादम्

४. E: स्वविषयान् रूपादीन्

५. C: व्यञ्जकः स्यात्तदा

६. C omits समस्तं

७. E: घटघटिकादि

८. A E: युगपदभिव्यञ्जयम्

९. C: न च तथा

१०. C: अपि च निश्चिते प्राक्सत्त्वे कारकव्यापारोऽभिव्यञ्जकः कल्प्येत, अनिश्चिते तु सत्त्वे

११. E: कार्यत्व

१२. B: सत्त्वराजमार्गः

१३. B: किं वा न सतीति; C: किं सती etc.,

१४. C: प्रथमे for यदि सती

१५. All except C insert a च

१६. C: द्वितीये तु यथा etc.

१७ E: यथामतं स्याः

१८. C: सत्त्वमिति कल्प्यते

१९. C: कार्यस्यापीष्यताम्

२०. C omits this anumāna.

महति, कुलालादिकारकव्यापारान्वयव्यतिरेकानुविधायित्वात्, संप्रतिपन्नकार्याभिव्यक्तिवत्' इति। तस्मात् प्रागुत्पत्तेः असत् कार्यं इति तार्किका मीमांसकाश्च मन्यन्ते।

तदेतत्[1] प्रतिविधीयते। न तावत् प्रागुत्पत्तेः अत्यन्तमसत्[2] कार्यम्, अनुत्पत्तिप्रसङ्गात्, आकाशकुसुमवदेव। ननु आकाशकुसुमस्य कारणाभावात् अनुत्पत्तिः, न पुनरसत्त्वादेव[3]; घटादेः पुनरसतोऽपि कारणभावात्[4] उत्पत्तिः; इति वैषम्यम्। तदेतदसांप्रतम्[5], असतो घटादेः[6] कारणेन सम्बन्धानुपपत्तेः असम्बद्धस्य[7] च कारणानुपयोगात्। अथ[8] कारणव्यापारादेव तेन असम्बद्धमपि किञ्चिदसदुत्पद्यते, अविशेषात् तर्हि तत एव सर्वमुत्पद्यताम्।

स्यादेतत् 'असतोऽपि योग्यस्यैव कारणव्यापारात् उत्पत्तिः न सर्वस्य' इति। का तर्हि कार्यस्य प्रागुत्पत्तेः योग्यता नाम[9]? किं निरुपाख्यतामात्रमेव, किं वा तद्विलक्षणत्वम्, अथ वा निरुपाख्यस्यैव कश्चन धर्मः? यद्याद्यः[10] कल्पः, तर्हि सर्वमसत् योग्यमेव इति सर्वमुत्पद्येत[11]। अथ योग्यत्वं अत्यन्तासतो वैलक्षण्यम्[12], तदपि[13] सत्त्वं अनिर्वचनीयत्वं वा? उभयथापि असत्कार्यवादभङ्ग[14]प्रसङ्गः। अथ असत एव कश्चित् धर्मो योग्यत्वमिष्येत[15], सोऽपि निरुपाख्यः तद्विलक्षणो वा? निरुपाख्यत्वे सति असदन्तरादविशेषः[16]; तद्विलक्षणश्चेत्, तस्यापि कार्यत्वे सति प्रागुत्पत्तेः सतः अनिर्वच-

---

१. C: तत्र ब्रूमः
२. E: त्पत्तेः सत् कार्यं, thus dropping a few letters.
३. C: न त्वसत्त्वात
४. C: कारणसंभवात् उत्पत्तिरविरुद्धा, मैवं E: कारणाभावात्
५. B: तदेतदसत्
६. E: घटादकारणेन
७. All except C give बन्ध
८. E omits थ
९. A E omit नाम
१०. C: आद्ये
११. B: उत्पद्यते
१२. E: विवक्षणन्
१३. C omits अपि
१४. E omits भङ्ग
१५. E: इष्यते
१६. A: शेषात्

नीयस्य वा [[1]कार्य[2]स्वरूपस्य इष्टत्वात् असत्कार्यवादभङ्गः। तस्मात् अतिप्रसङ्गपरिहाराय कार्यस्य प्रागुत्पत्ते[3]रपि असद्विलक्षणत्वं आश्रयणीयम्।

ननु] कार्यस्य असद्विलक्षणत्वेऽपि कुलालादिव्यापारेण सर्वं असद्विलक्षणं किं[4]मिति नोत्पद्येत? तस्य कारणं[5]विशेषेण सम्बन्धोपपत्तेः योग्य[6]तोपपत्तेश्च इति ब्रूमः। न[7] च निरुपाख्यस्य इव असद्विलक्षणस्य कारणसम्बन्धानुपपत्तिः, स्वरूपसं[8]द्भावात्। ततश्च कारणविशेष[9]सम्ब[10]द्धस्यैव असद्विलक्षणकार्यस्य देशकालादृष्टनिमित्तपरिपाकयोग्य[11]स्य कारक[12]व्यापारविशेषात् उत्पत्तिरुपपद्यते। [13]अतिप्रसङ्गानुमानेन वा कार्यस्य असत्त्वे सति उत्पत्त्यन्यथानुपपत्त्या वा प्रागुत्पत्तेरपि असद्विलक्षणत्वं तावदा[14]गतम्।

यत्पुनरुक्तम् 'कार्यस्य प्रागुत्पत्तेः योग्यत्वे सति अनुपलम्भात् असत्त्वम्' इति, कै[15]तद्व्याप्तम्? योग्यस्य अनुपलंभे स[16]त्यसत्यत्वमिति व्याप्तं गगनकुसुमादौ, इति चेत्, न; अनैकान्तिकत्वात्। तथा हि। बहुलान्धकार-[17]देशोपविष्टघटादेः अनुपलभ्यमानस्यापि संप्रतिपन्नमेव सत्त्वम्। अथ तस्य आलोकानाकलितत्वात् अयोग्यत्वमुच्य[18]ते, तर्हि कार्य[19]स्य प्रागुत्पत्तेः कारकव्यापारानाकलितत्वात् अयोग्यत्वं समानम्।

---

१. E omits the portion within brackets.
२. C omits स्वरूप
३. A omits अपि
४. B omits किं
५. C: कारणसम्बन्धोप
E omits कारण
६. A omits योग्यतोपपत्तेः
७. E: ननु for न च
८. C: संभवात्
९. A omits विशेष
१०. A B: सम्बन्ध
११. E: योग्यकारक
१२. C: कारण
१३. C E: अतः प्रसङ्गा
१४. B: अवगतं
C: ता ... सं योग्यस्यानुप
१५. E: द्वैतव्याप्तं
१६. C: अनुपलम्भे सत्यसत्त्वं व्याप्तम्;
A: अनुपलम्भसत्त्वसत्त्वमतिव्याप्तम्
१७. All except C omit देश
१८. C: उच्येत
१९. C: कार्यप्रागुत्पत्तेः

अथ मतम्—आलोकसहकृतमेव चक्षुः घटादिग्रहणकारणं प्रसिद्धम्; अतस्तदभावे[1] सति कारणवैकल्यादेव अन्धकारस्थघटादेः[2] अग्रहणं युज्यते, न ग्राह्यासत्त्वनिमित्तम्[3]; न चैवं कुलालादिव्यापारस्य चक्षुरादिसहकारित्वमस्ति; यदि स्यात्, उत्तरकालमपि तेन विना घटादेः उपलब्धिर्न[4] स्यात्; अतः कार्यस्य प्रागुत्पत्तेः, पुष्कलकारणे सति अग्रहणं ग्राह्याभावनिमित्तमेव—इति। नैतत्सारम्। यथा आलोकद्रव्य[5]संसृष्टस्यैव घटादेः चक्षुर्ग्राह्यत्वदर्शनात् आलोकसंसर्गासंसर्गौ घटस्य[6] योग्यत्वायोग्यत्वे कल्प्येते, तथा विशिष्टावयवविन्यासोपेतकारणद्रव्यसंसृष्टस्यैव घटादिकार्यस्य[7] प्रत्यक्षादिविषयत्वदर्शनात् तथाविधकारण[8]द्रव्यसंसर्गासंसर्गौ कार्यस्य योग्यत्वायोग्यत्वे[9] भवतः। ततश्च कार्यं प्रागुत्पत्तेः असद्विलक्षणमपि आलोकसंसृष्ट इव घटः तथाविधकारणद्रव्यासंसृष्टं सत् प्रत्यक्षादेः अयोग्यमिति तदग्रहणं न ग्राह्याभावनिमित्तं शक्यं वक्तुम्। घटादिकार्यस्य[10] अकार्यत्वे विशिष्टावयवविन्यासोपेतस्वकारणसंसर्गादेव प्रत्यक्षादिविषयत्वं इति न किञ्चिदनुपपन्नम्; अत एव असद्विलक्षणस्यापि कार्यस्य प्रागुत्पत्तेः अयोग्यत्वात्[11], 'योग्यत्वे सति अनुपलंभात्' इत्यसिद्धो हेतुः।

यत्तूक्तम्[12] 'कारकव्यापारस्य अभिव्यञ्जकवैषम्यात् कार्यस्य[13] सत्त्वनिमित्तमेवासौ' इति, तदेतच्चोद्यं मीमांसकानां न शोभां[14] बिभर्ति; शब्दाभिव्यञ्जकप्रयत्नादेः[15] प्रदीपादि[16]-

---

१. E: अतदभावे
२. C: स्थघ ... रग्रहमुपपद्यते
३. C: ग्राह्यसत्त्व
४. C: अनुपलब्धिः स्यात्
५. C omits द्रव्य
६. C: कार्यस्य
७. C: कार्यद्रव्यस्य
८. C omits कारण
९. A E: योग्यायोग्यत्वे
१०. C: कारणस्यापि कार्यत्वे
११. C: योग्यत्वे सत्यनुपलभ्यमानत्वात् इत्यसिद्धो हेतुः;
A: उपलम्भयोग्यत्वायोग्यत्वे
१२. C: यदुक्तं
१३. B: कार्यस्यासत्त्वनिमित्त
१४. C: शोभते
१५. C: कस्य प्रयत्नादेः
१६. A E: प्रतिवादि

वैषम्ये[1] सति अभिव्यञ्जकत्वाभ्युपगमात्। नापि तार्किकसमयावष्टंभेन[2] चोद्यमुपपद्यते[3], प्रतिकार्यं उत्पत्तिकारकादिभेदात्। अतः कारकस्य[4] अभिव्यञ्जकत्वेऽपि न[5] युगपत् सकलकार्यव्यञ्जकत्वम्[6]।

यदपीदमुक्तम् 'प्रागुत्पत्तेः कार्यस्य[7] सत्त्वे निश्चिते कारकव्यापारस्य अभिव्यञ्जकत्वलाभः, कार्यस्य[8] प्रागुत्पत्तेः सत्त्वमेव अनिश्चितम्' इति, तदप्यचारु[9] विरचितम्, कार्यस्य अनुमानेन सत्त्वनिश्चयात्[10]। तथा हि।• विवादगोचरापन्ना जनिः सकर्तृका भवितुमर्हति[11], क्रियात्वात्, गमनादिक्रियावत्[12], इति। तथा विवादगोचरापन्नः[13] कर्ता स्वकर्तृकक्रियायाः प्रागेव लब्धात्मकः, कर्तृत्वात्[14], गमनादिकर्तृवत् इति[15]। तदेवं उत्पद्यमानस्य प्रागुत्पत्तेः असद्विलक्षणत्वमवगतम्। ततश्च[16] कारकव्यापारस्य अभिव्यञ्जकत्वमनुमिमीमहे। [तथा[17] हि—विवादाध्यासितः] कुलालादिकारकव्यापारः स्वसिद्धेः प्रागेव विद्यमानस्य अभिव्यञ्जको भवितुमर्हति[18], कारकव्यापारत्वात्[19], कूपाकाशाद्यभिव्यक्तिकारकव्यापारवत्—इति।

यच्चेदमुक्तम् 'कार्यस्य[20] अभिव्यक्तिः प्रागुत्पत्तेः सतीति[21] चेत्, कारकव्यापारानर्थक्यप्रसङ्गः; असतीति[22] चेत्, असत्कार्यवादप्रसङ्गः; अभिव्यक्तेरपि अभि-

---

१. C: वैलक्षण्ये सत्यपि अभि
२. C: मत for समय
३. C omits चोद्यं
४. C: कारकव्यापारस्य
५. E: त्वेऽपि सकलकार्यव्यासङ्गः
६. C: कार्यप्रसङ्गः
७. E: कार्यत्व
८. C: कार्यस्य तु
९. C: तदप्यपेशलम्
१०. E: तत्त्व
११. C omits भवितुमर्हति
१२. C: गमनादिवत्
१३. C omits विवादगोचरापन्नः
१४. C: कर्तृकत्वात्
१५. C omits इति
१६. C omits च
१७. C omits the words bracketed.
१८. C drops भवितुमर्हति
१९. C: अनभिव्यक्तविषयत्वे सति कारक etc.
२०. C: कार्याभिव्यक्तिः
२१. C omits इति
२२. C E omit इति

व्यक्त्यन्तराभ्युपगमे[1] अनवस्था' इति, नैष दोषः; कार्यस्य सत्त्वाभ्युपगमात्[2], अभिव्यक्तेरेव असत्त्वात्। न च वाच्यम् 'अभिव्यक्तेरपि कार्यत्वात् असत्कार्यवाद-प्रसङ्गो दुर्वारः' इति; अभिव्यक्तेः अकार्यत्वात्। कार्याभिव्यक्तिर्हि सा। अपि च परेषामप्ययं पर्यनुयोगः समानः। तथा हि। जनेः कार्यत्वे जन्यन्तरापेक्षत्वात्[3] अन-वस्था; अकार्यत्वे सति कारकव्यापारवैयर्थ्यप्रसङ्गः, इति। अथ 'जनिः स्वयं कार्यं न भवति; किं तु कार्यजनिरेव[4]; सा च[5] स्व[परनिर्वाहिका[6]; अतो नानवस्था, नापि नित्यत्वप्रसङ्गः' इति, तदेतत्सर्वमभिव्यक्तावपि समानम्। ततः[7] प्रागुत्पत्तेः सदेव] कार्यं इति सांख्याः स्वयूथ्याश्च केचित्।

तदपि दुर्निरूपम्, सत आत्मनो जन्मादर्शनात्। तथा हि। विमतिपदं[8] कार्यं प्रागुत्पत्तेः परमार्थतः[9] सत् न भवितुमर्हति, अनुत्पत्तिप्रसङ्गात्, आत्मवत्, इति।

स्यादेतत् 'कार्यस्य अभिव्यक्तिरेव अस्माभिः[10] इष्यते, न उत्पत्तिः' इति। तर्हि इदं वक्तव्यम् 'सा अभिव्यक्तिः कार्यमेव उत वस्त्वन्तरम्' इति। यदि कार्यमेव, तर्हि तस्याः प्रागुत्पत्तेः असत्त्वे सति असत्कार्यवादप्रसङ्गः; सत्त्वे तस्या-प्यन्याभिव्यक्तिः[11] तस्याप्यन्या इत्यनवस्था कारकव्यापारानर्थक्यं च[12] प्रसज्येत[13]। वस्त्व-न्तरं तच्चेत्[14], तयोः सम्बन्धः अस्ति वा न वा? नास्ति चेत्, न तस्य अभिव्यक्तिः।

---

१. C adds तु
२. E: कार्यत्वासत्त्वावगमात् etc.
A: कार्यस्यैव अनभ्युपगमात्;
B: कार्यस्यासत्त्वाभ्युपगमात्
३. C: अपेक्षायां
४. E adds सा and reads सा च again.
५. C omits च
६. E omits the part within brackets.
७. C: अतः
८. C: विमतं
९. C: परमार्थसत्
१०. C omits अस्माभिः
११. C omits अपि
१२. All except C give वा
१३. C: आपद्येत
१४. C omits तत्

अस्ति चेत्, असौ प्रागुत्पत्तेरपि सन् न वा? संश्चेत्, कारकव्यापारानर्थक्यादि-दोषप्रसङ्गः; असंश्चेत्, असत्कार्यवाददोष[1]प्रसङ्गः। तस्मात् कार्यं प्रागुत्पत्तेः न सत्, नाप्यसत्। अतोऽनिर्वचनीयमायामयं कार्यम्। न हि मायायामपि सदसतोरिव तर्कशलाकानिवेशः, असंभाव्यमानावभासरूपत्वात् तस्याः। श्रुतिश्च सदसद्विलक्षणमेव कार्यं दर्शयति "नासदासीत् नो सदासीत्[2]" इति। स्मृतिरपि—

"आसीदिदं तमोभूतं अप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥" इति।

कार्यस्य[3] प्रागुत्पत्तेः या गतिरुपन्यस्ता सैव तस्य प्रध्वंसादूर्ध्वमपि द्रष्टव्या।

तस्मात् सकलमिदं घटशकटा[4]दिकं जगत् सदसद्विलक्षणानिर्वचनीयम्, कार्यत्वात्, इति सिद्धम्।

इति तत्त्वशुद्धौ अ[5]सत्कार्यवादनिराकरणप्रकरणम्।



१. C omits दोष
२. RV: X—129.
३. C: कार्यस्य प्रागुत्पत्तेः मायामयत्व-मेवाह। सैव गतिः etc.
४. C: घटशकटादिकार्यं सदस etc.
५. C: सत्कार्यनिरूपणम्

## ॥ क्षणभङ्गवादनिराकरणं अष्टाविंशम् ॥

स्थिरपूर्णबोधवपुषा पुरुषैः[1] स्थिरमेव दृश्यमपि पश्यति यः ।
सकलं सदैव भुवनं यमयन् तमहं नमामि शिरसा नृहरिम् ॥

इदमिदानीं चिन्त्यते[2] 'किं घटादिभावाः क्षणभङ्गिनः[3] किं वा स्थायिनः?' इति । तत्र हि[4] सौगता मन्यन्ते—घटादिभावानां[5] प्रत्यक्षेणैव[6] क्षणिकत्वमीक्षामहे[7] । तथा हि । प्रत्यक्षं तावत् वर्तमानवस्तु[8]ग्राहि । तच्च[9] घटादिवस्तु[10] वर्तमानतया परिच्छिन्दत्[11] तस्य अवर्तमानकालसम्बन्धं व्यवच्छिनत्ति[12] । यथा नीलगुणविशिष्टवस्तु परिच्छिन्दत्[13] तदा[14] तस्यानीलसम्बन्धमपि स[15] व्यवच्छिनत्ति[16] । अपि च अनुमानेनापि घटादिभावानां क्षणभङ्गुरत्वमध्यवस्यामः । तथा हि । विवादास्पदीभूताः भावाः क्षणभङ्गिनो भवितुमर्हन्ति; सत्त्वात्; यदक्षणिकं न[17] तत्सत्, यथा गगनकुसुमादि[18]; सन्तश्चेमे भावाः; तस्मात् क्षणिकाः इति । अपि च स्थायिवादिनोऽपि यो घटस्य विनाशक्षणः[19] प्रसिद्धः तदनन्तरपूर्वघटसत्ताक्षणस्य स्वानन्तरोत्तरक्षणे घटविनाशेन व्याप्तिः संप्रतिपन्ना । तथा च सति सर्वस्य क्षणिकत्वं अनुमातुं शक्नुमः । तथा च[20] विवादगोचरापन्न[21]घट-

---

१. C: पुरुषं
२. B: विचार्यते ; C: संप्रति विचार्यते
३. C: क्षणिकाः
४. B C E omit हि
५. C: घटादीनां
६. C: प्रत्यक्षमेव
७. C omits ईक्षामहे and तथा हि; A gives an alternative reading : क्षणभङ्गुरत्वमध्यवस्यामः
८. B omits वस्तु
९. B omits तच्च
१०. C: घटादिकं
११. A corrects into परिच्छिन्नं
१२. B: परिच्छिनत्ति
१३. A: च्छिन्नस्तदा
१४. C omits तदा
१५. B omits स
१६. A C D: परिच्छिनत्ति
१७. All except E omit न
१८. B: तत्कुसुमादि
१९. B: विनाशलक्षणः
२०. E omits च
२१. B: पन्नाः

सत्ताक्षणाः[1] स्वानन्तरोत्तरक्षणगतघटविनाशव्याप्ताः, घटसत्ताक्षणत्वात्[2], अन्त्यक्षणवत् । तथा च घटादिभावाः क्षणिकाः, प्रत्यभिज्ञायमानत्वात्, ज्वालादिवत्; स्थायिबुद्धिवेद्यत्वाच्च क्षणिकाः, ज्वालादिवदेव। अपि[3] च विवादाध्यासिता घटादिभावाः क्षणभङ्गिनो भवितुमर्हन्ति; अर्थक्रियाकारित्वात्; यदक्षणिकं न तदर्थक्रियाकारि यथा गगनकुसुमादि[4]; न तथेमे भावा नार्थक्रियाकारिणः[5]; तस्मात् क्षणिकाः—इति ।

तदेतत् निराकुर्महे। न तावत् क्षणिकत्वं प्रत्यक्षेणेक्षितुं शक्यम्, प्रत्यक्षस्य वस्तुस्वरूपविधायित्वात् अतीतकालादि[6]व्यवच्छेदकत्वा[7]नुपपत्तेः। न हि प्रत्यक्षस्य एकेन व्यापारेण वस्तुस्वरूपविधायित्वं अन्य[व्यव[8]च्छेदकत्वं च संभवति, विधि]व्यवच्छेदयोः भिन्नव्यापारात्मकत्वात्[9]। नाप्येकस्य प्रत्यक्षविज्ञानस्य युगपत् क्रमेण वा अनेकव्यापारसंभवः, जन्ममात्रव्यापारत्वात्[10] अस्थिरत्वाच्च विज्ञानस्य। नापि वर्तमानकालपरिच्छेदनान्तरीयकोऽतीतादिकालसम्बन्धव्यवच्छेदः इति युक्तम्, प्रत्यक्षविज्ञाने अतीतादिकालस्य[11] च अनवभानात्। न च अप्रतिभासमानस्य विधिः निषेधो वा संभवति। अथ स्मृतिविज्ञानेन[12] बुद्ध्यारूढस्य अतीतादिकालस्य व्यवच्छेदः कल्प्येत, तर्हि तद्वदेव घटादेः अतीतादिकालसम्बन्धस्य अबाधितस्मृतिगोचरत्वात् नासौ व्यवच्छेत्तुं शक्यः। अपि च प्रत्यक्षं वर्तमानकालसम्बन्धसमये कालान्तरसम्बन्धं व्यवच्छिनत्ति उत सर्वदैव? वर्तमानसम्बन्धसमये चेत्, अस्तु। नैतावता क्षणिकत्वसिद्धिः; घटादेः कालान्तरसम्बन्धस्य स्वरूपेणानिराकरणात्। न च सर्वदैव, व्या-

---

१. B: लक्षणाः
२. B: लक्षणत्वात्
३. E: अविवादा
४. B: तत्कुसु
५. A: अनर्थ
६. B: कालत्वादि
७. E omits त्व
८. E omits the portion within brackets.
९. B: व्यापारकार्यत्वात्
१०. C: व्यापाराच्च विज्ञानस्य
११. B: कालसम्बन्धस्यानवभासनात्
१२. A: विज्ञानो

त्यभावात्। न हि नीलादिवस्तुपरिच्छेदकं[1] प्रत्यक्षं तस्य सर्वदैव अनीलादिसम्बन्धं व्यवच्छिनत्ति। तस्मात् असदेतत्[2] 'प्रत्यक्षेण क्षणिकत्वमीक्षामहे' इति।

यत्पुनरुक्तम्[3] 'घटादिभावाः क्षणिकाः सत्त्वात्' इति, तदप्यसत्। सतोऽपि[4] हि चैत्रादेः स्थायित्वं प्रत्यभिज्ञायते। ननु न प्रत्यभिज्ञा प्रमाणम्[5]; प्रत्यक्षादावनन्तर्भावात्। तथा हि। न तावत् प्रत्यक्षे अन्तर्भावः, संस्कारजन्यत्वात्, परोक्षविषयत्वाच्च, स्मृत्यादिवत्। नाप्यनुमाने[6], व्याप्तिजन्यत्वाभावात्। अतो रजतादिज्ञानवत् अप्रमाणं प्रत्यभिज्ञा[7]।- नेति ब्रूमः, प्रत्यक्षे अन्तर्भावसंभवात्। तथा हि। प्रत्यक्षं प्रत्यभिज्ञानम्, संप्रयोगजन्यत्वात्, अपरोक्षविषयत्वाच्च[8]। ननु संस्कारजन्यत्वात् परोक्षविषयत्वाच्च अप्रत्यक्षत्वमुक्तम्। बाढमुक्तम्[9]; तथापि प्रत्यक्षपक्षपात एव प्रत्यभिज्ञाया युक्तः, विशेषणविशेष्ययोः उभयोरपि[10] प्रत्यक्षत्वात्; परोक्षकालादिविशेषणमात्रस्यैव अप्रत्यक्षत्वात् ब्राह्मणग्रामादिवत्। तदेवं प्रत्यक्षबाधितपक्षत्वाच्च[11] कालात्ययापदिष्टो हेतुः।

यत्तूक्तम् 'घटान्त्यक्षणस्य[12] विनाशव्याप्तत्वात् पूर्वघटसत्ताक्षणा[13] अपि तथैव, घटसत्ताक्षणत्वात्[14]' इति, तदपि प्रत्यभिज्ञाविरुद्धम्[15]। ननु प्रत्यभिज्ञा सादृश्यनिबन्धना सती न अनुमानं बाधितुमुत्सहते। तन्न[16], इतरेतराश्रयत्वात्, घटादेः प्रतिक्षणविनाशे[17]

---

१. E: च्छेदं
२. E omits असत्
३. B: यदुक्तं
४. B omits अपि
५. B: प्रामाण्यं
६. B: मानम्
७. A E: ज्ञानमिति ब्रूमः
८. A E: परोक्ष
९. E omits उक्तम्
१०. A E omit उभयोः
११. B: अप्रत्यक्ष
१२. E: अन्तक्षण
१३. B: लक्षणा
१४. B: क्षणिकत्वात्
१५. B: भिज्ञान
१६. A omits तन्न
१७. A: प्रक्षणाविनाशे, which has subsequently been corrected wrongly into प्रत्यक्षविनाशे; E: प्रत्यक्षेण विनाशे

सिद्धे सादृश्यनिबन्धनी[1] प्रत्यभिज्ञा[2], सिद्धे[3] च प्रत्यभिज्ञायाः सादृश्यनिबन्धनत्वे सति प्रतिक्षणविनाशो घटादेः इति। न च अनुमानेन घटादेः प्रतिक्षण[4]विनाशोऽध्यवसीयते इति युक्तम्, अनुपलब्धिविरोधात्। अस्ति चेत् घटस्य प्रतिक्षणं[5] भेदः, स भेदो योग्यत्वात् उपलभ्येत। ज्वालादाविव अति[6]सादृश्यात् [[7]भेदानुपलम्भः इति चेत्, नैतत्[8]; अत्रापि सिद्धे भेदे सादृश्यसिद्धिः, सादृश्य[9]सिद्धौ च तन्निबन्धनत्वात् अनुपलब्धेः अनुमानप्रामाण्यम्, अनुमानप्रामाण्ये च भेदसिद्धिः इति परस्पराश्रयत्वात्। कथं पुनः ज्वालादौ प्रत्य[10]भिज्ञया स्थायित्वनिश्चये क्षणिकत्वाध्यवसायः? इति चेत्,] अनन्यथासिद्धि[11]प्रकाशत्ववैतत्यानुपपत्त्या इति वदामः। तथा[12] हि। प्रदीपस्तावत् अप[12]-वरकैकदेशसमुत्पन्नः सहसैव सकलमपवर[13]कं व्याप्नुवत् दृश्यते। न[14] च गमनमन्तरेण देशात् देशान्तरव्याप्तिः संभवति। तत्र यदि तत्क्षणमेव ज्वालान्तरं नोत्पद्येत, तदा तैलवर्त्यादिदेशे प्रकाशो न भवेत्, प्रथमज्वालायाः अपसृतत्वात्। न च स्थायिन एव प्रकाशस्य अपसर्पणं इति युक्तं कल्पयितुम्, तैलवर्त्याद्यभावेऽपि अवस्थानप्रसङ्गात्। न च मण्या[15]दिवत् स्थायिन एव प्रदीपस्य विरल[16]निबिडावयवात्मकतया[17] प्रकाशवैतत्यं कल्पयितुं शक्यम्, तैलवर्त्याद्युपचयापचयाभ्यां सह [प्र[18]काशस्य उपचयापचयदर्शनात्। तत्रैवं सति यथा प्रथमज्वालापसर्पणे सति तत्क्षणमेव तैलवर्त्यादिदेशे ज्वालान्तरमुत्पद्यते, तथा तत्तदपसर्पणेऽपि अन्यदुत्पद्यते इति प्रकाशवैतत्यानुपपत्त्यैव ज्वा-

---

१. E: सामान्य for सादृश्य
२. A: निबन्धनप्रत्यभिज्ञाने
३. B: सिद्धैव
४. A E omit प्रतिक्षण
५. B: प्र...स्स भेदो
६. A E omit अति
७. E omits the portion bracketed.
८. A: नेतरासिद्धे
९. B: सादृश्यनिबन्धनत्वादनुपलब्धेः
१०. B: ज्वालादौ क्षणिकत्वाध्यवसायः
११. B: सिद्धानुपपत्त्या
E: सिद्धकार्यानुपपत्त्या
१२. B: अपव ... कैकदेश; but all except B omit एक in एकदेश
१३. B: मपप ... कं
१४. E: न गमन्तरेण
१५. E: मन्यावत्
१६. A: निबिडाकावयव etc.
१७. A E: वात्मतया
१८. B omits the portion within brackets.

लानां प्रतिक्षणं[1] उत्पत्तिविनाशसंभवः। न च वाच्यम् 'प्रतिक्षणं उत्पत्तिविनाशेऽपि स्थाय्येव अन्वयिकारणं वाच्यम्; तथा सति स एव प्रदीपः' इति[2]। सत्यम्[3], अन्वयिकारणस्यैव अरणि[4]गतस्येव अग्नेः अलक्ष्यमाणस्वरूपस्य स्थायित्वेऽपि कार्यबुद्धिगोचरस्य तैलवर्त्याद्यु[5]पचयापचयाभ्यां सह] उपचयापचयवतः प्रकाशवैतत्यकार्यानुपपत्त्या क्षणिकत्वमस्माभिः भण्यते इत्यदोषः। कथं पुनः स्थायिनो मण्यादेः प्रकाशवैतत्यम्? इति। उच्यते। मण्यादेः स्वच्छपार्थिवद्रव्यारब्धत्वात् पार्थिवावयवानां च मण्यादौ निबिडविरला[6]त्मतया व्यवस्थितानां स्थायित्वात् त[7]दनुगततैजसावयवानां आगमापायित्वेऽपि[8] मण्यादेः स्थायित्वसिद्धिः। स्थायिषु पार्थिवावयवेषु स्वच्छेषु तैजसावयवानुगमात् सर्वदैव प्रकाशानुवृत्तिरुपपद्यते। तत्र यद्यपि[9] मण्यादौ अनवरततेजोऽवयवानुगमेन तैलवर्त्यादिषु[10] दृष्टकारणं न[11] किञ्चिदुपलभ्यते, तथापि ताव[12]न्मात्रस्य अदृष्टादिकारणं कल्प्यते[13]। अन्यथा प्रतिक्षणं उत्पत्ति[14]रप्रकाशो वा प्रसज्येत[15]। न हि प्रतिक्षणमुत्पत्तिः अप्रकाशो[16] वा मण्यादौ कल्पयितुं शक्यते; तैलवर्त्यादिदृष्टकारणा[17]नुपलंभात्, प्रकाशोपलंभाच्च। नापि तदुत्पत्तौ अदृष्टकारणकल्पना संभवति, तैजसावयवानुगममात्रहेत्वदृष्टादिकल्पनया प्रकाशवैतत्यकार्योपपत्तेः[18]। तस्मात् अस्त्येव प्रदीपस्य मण्यादि[19]वैषम्यम्।

---

१. E: प्रत्यक्ष

२. C: प्रदीपस्य स्थायित्वलाभ इति

३. A inserts प्रत्यभिज्ञाविषयत्वं

४. E: शत for गत

५. E: द्युपचयाभ्यां

६. A: विरलावयवात्मतया

७. A omits तत्

८. B omits अपि

९. E drops यद्यपि

१०. B: दिदृष्ट

११. B E omit न

१२. B: तन्मात्र

१३. B: कल्प्येत

१४. E: उत्पद्यते स्थिरप्रकाशो

१५. All except B read प्रसज्यते

१६. A: उत्पत्तिर्मण्यादौ
E: उत्पत्तिं मण्यादौ

१७. E: दृष्टान्तकारणानुपलंभात्

१८. E: कार्यानुपपत्तेः

१९. A: न मण्यादि

ननु यथा हिङ्ग्वादि[१]द्रव्यस्य एकत्रैव स्थि[२]तस्य स्थायिन एव सूक्ष्मावयवविसर्पणेन आश्र[३]यमन्तरेण वा गन्धगुणविसर्पणं एवं प्रदीपस्य स्थायिन एव प्रकाशगुणविसर्पणमस्तु; किमिति प्रतिक्षणं उत्पत्त्यादि कल्प्यते? इति। उच्य[४]ते। प्रकाशस्य प्रभा[५]त्वेन गुणत्वाङ्गीकरणे स[६]ति न रूपगुणादन्यत्वं शक्यं वक्तुम्, चक्षुरेकेन्द्रियग्राह्यत्वात्। तत्र च रू[७]पगुणस्य स्वाश्रयद्रव्येण समानेन्द्रियग्राह्यत्वात्, स्वाश्रयग्रहणमन्तरेण ग्रहणानुप[८]पत्तेः, निराश्रयस्य वा अनुमिताश्रयस्य वा प्रतीतिकल्पना नोपपद्यते। गन्धस्य द्रव्येण समानेन्द्रियग्राह्यत्वाभावात्, स्यादपि कदाचित् अनुमिताश्रयस्य[९] प्रतीतिः [१०]इति, अस्त्येव हि[११] हिङ्ग्वादिद्रव्यवैलक्षण्यं च [१२]प्रदीपस्य। तस्मात् युक्तं ज्वालादेः क्षणिकत्वं इति, सादृश्यात् भेदानुपलंभः, प्रत्यभिज्ञायाः तत्र भ्रान्तित्वं चेति। घटादिभावानां तु क्षणिकत्वमन्तरेण अनन्यथासिद्धकार्याभावात्, क्षणिकत्वानुमानं प्रत्यभिज्ञाविरुद्धं च इति भवत्येव कालात्ययापदिष्टता।

अपि च सत्कार्यवादाश्रयणात्[१३] आविर्भावतिरोभावमात्रमेव कार्यस्य, [१४]न कदाचिदपि अत्यन्ताभावः। तत्र घटसत्ताक्ष[१५]णस्य स्वानन्तर[१६]भावव्याप्तिः अनुमीयते, किं

---

१. E: हिंसादि

२. B: अवस्थितस्य

३. A E: वाश्रयमन्तरेण

४. B E omit उच्यते

५. B omits प्रभात्वेन
E: प्रभावत्त्वेन

६. E omits सति

७. E omits रूप

८. B: अनुपपत्तिः

९. E adds अपि

१०. A omits इति

११. B omits हि
E: यदि हि

१२. A E omit प्रदीपस्य

१३. A reads यणाभाविर्भावतिरोभाव, but corrected into यणादनाभाविर्भावमात्रमेव;
E: यणाभावादाविर्भाव.

१४. E omits न

१५. B: लक्षणस्य

१६. A: न्तरभाव;
E: सानन्तरभाव

वा नाश[1]क्रियाव्याप्तिः ? [पूर्वस्मिन्[2] साध्यविकलो दृष्टान्तः ; उत्तरस्मिन् उपलब्धि-विरोधः ।

यदप्येतदुक्तम् 'घटादिभावाः क्षणिकाः] प्रत्यभिज्ञायमानत्वात्' इति, तदपि दुर्भाषितम्, विरुद्धत्वात् हेतोः ; प्रत्यभिज्ञा हि वस्तुनः पूर्वापरकालसम्बन्धावमर्शेन स्थायित्वमेव साधयति न क्षणिकत्वम्, इति । ननु ज्वालादौ[3] क्षणिकत्वेन व्याप्तं प्रत्यभिज्ञायमानत्वम् । न, ज्वालादेरपि निरन्वयविनाशासिद्धेः, तिरोभावमात्रत्वात् विनाशस्य । अस्तु तर्हि घटादेरपि प्रतिक्षणं[4] तथा विनाशः इति । न[5]; अनुभवविरोधात् प्रत्यभिज्ञाविरोधाच्च इत्युक्तम् । 'स्थायिबुद्धिवेद्यत्वात् घटादिभावाः क्षणिकाः' इत्येतदपि एतेनैव प्रत्यूढं[6] द्रष्टव्यम् ।

यदपीदमुक्तम् 'सर्वे भावाः क्षणिकाः, अर्थक्रियाकारित्वात्' इति, तदपि विरुद्धम्; स्थायिन एव अर्थक्रियाकारित्वदर्शनात् । स्यादेतत्—स्थायिनः अर्थक्रियाकारित्वं यौगपद्येन वा स्यात्, क्रमेण वा । यौगपद्ये[7] न ह्येकस्मिन्नेव[8] क्षणे, समस्तार्थ[9]-क्रियानिवृत्तेः उत्तरकालं अर्थक्रियाभावात् असत्त्वप्रसङ्गः, [अर्थक्रियाकारित्वलक्षणत्वात्[10] सत्त्वस्य । अथ क्रमेण, तदापि वक्तव्यं किमसौ शक्तस्वभावो वा स्यात् अशक्तस्वभावो वा इति । यदि शक्त[11]स्वभावः, तर्हि एकदैव सकलकार्यशक्तेः तदैव[12] अर्थक्रियाकारी इति उत्तरकालमसत्त्वप्रसङ्गः।] अथ अशक्त[13]स्वभावः, तर्हि न[14] कदाचिदपि अर्थक्रिया-

---

१. A has an alternative reading: किं वा अनभिव्यक्तिः

२. E omits the portion within brackets.

३. B: ज्वालायां

४. E: क्षणः

५. E: ननुभव

६. E: प्रतिव्यूढं द्रव्यम्

७. B: यदि तावद्यौगपद्ये तर्हि कस्मिन्नेव क्षणे

८. E: न तर्ह्येकस्मिन्

९. A: समर्थार्थ

१०. E omits the portion within brackets.

११. B: शक्तः

१२. All except B give तदेव

१३. E: अशक्ति

१४. E omits न

कारी इति[1] सर्वदैव असत्त्वप्रसङ्गः। अतः[2] स्थायिनोऽर्थक्रियाकारित्वानुपपत्तेः क्षणिकस्यैव अर्थक्रियाकारित्वम्; ततश्च घटादेः[3] अर्थक्रियाकारित्वात् क्षणिकत्व[4]मेव—इति। तदेतत् "प्रतीति[5]न्याय[6]विरुद्धं उत्प्रेक्षितं इति चोत्पश्यामः[7]। तथा हि। शक्तस्वभावस्यैव स्थायिनः मृदादिकारणस्य सहकारिभेदात् क्रमेण यौगपद्येन वा अनेककार्यकर[8]त्वं उपलभामहे। न च वाच्यम् 'प्रधानसहकारिणोः उभयोरपि स्थायित्वे शक्तस्वभावत्वे च सति तयोः सम्बन्धस्य सर्वदैव संभवात् सर्वदा कार्यजननप्रसङ्गः' इति; प्रधानसहकारिसमवायस्य[9] अदृष्टादिकृतत्वात्, अदृष्टादेश्च शास्त्रैकसमधिगतत्वेन अतर्कणीयत्वात्[10]। "अचिन्त्याः खलु ते भावाः न तांस्तर्केण योजयेत्" इति हि स्मरन्ति। अपि च अयं पर्यनुयोगः स्वरसभङ्गुरवादिपक्षेऽपि[11] समुद्भावयितुं शक्यते। तथा हि। क्षणिकत्वेऽपि अङ्गारावस्थायामपि अग्नेः किमिति धूमो नोत्पद्यते? पुष्पफलयोः वा अयं पूर्वापरीभावः किंनिबन्धनः? विपरीतक्रमोऽनियमो[12] वा किं न स्यात्? तथा 'तिलानां सिकतानां[13] च तैलसम्बन्धाभावाविशेषे सति किमिति तिलेभ्य[14] एव तैलमुत्पद्यते, न सिकताभ्यः?' इति पर्यनुयोगः तवापि समानः। अथ क्वचित् सहकारिविशेषसम्बन्धात्[15], क्वचिददृष्टसामर्थ्यात्, क्वचित् वस्तुस्वभावाच्च[16] इति सर्वत्र नियमः कल्प्यते[17], तर्हि स्थायिवादिनोऽपि सर्वमेतदविशिष्टं द्रष्टव्यम्[18]।

---

१. E omits इति
२. A reads अतः, but corrected into अथ
३. B: घटादेरपि
४. E omits त्व
५. E: प्रतीत
६. B: न्यास
७. B omits इति चोत्पश्यामः
E: इत्युत्पश्यामः
८. E omits कर
९. A E: समवधानस्य
१०. B: अतर्क्यत्वात्
११. E: प्रत्यक्षेऽपि
१२. B: अनियतो
E: अनियता च
१३. E: सितानां
१४. E: किमिति नोत्पद्यते, सितातिलपर्यनुयोगः तवापि समानः
१५. A E: सम्बन्धावगमात्; A corrects it into सम्बन्धात्
१६. A C D: सामार्थ्याच्च
१७. E: कल्प्यते
१८. E: द्रष्टव्यम्

यदप्येतदुक्तम् 'अर्थक्रियाकारित्व[1]लक्षणत्वात् सत्त्व[2]स्य, वस्तुनः तदभावे सति असत्त्वप्रसङ्गः' इति, तदपि निरूपणीयम् 'किं कारणस्य अर्थक्रिया[3] सत्त्वनिमित्तं आहोस्वित् प्रतीतिनिमित्तम्[4]?' यदि तावत् सत्त्वनिमित्तं तदा कार्यनिमित्तं कारणस्य[5] सत्त्व[6]मिति विरुद्धभाषितत्वा[7]त् उन्मत्तप्रलपितसम[8]मेतदापद्येत। अथ प्रतीतिनिमित्तं कारणस्य अर्थक्रिया इति कल्प्येत, तर्हि तस्या अपि स्वार्थक्रियानिमित्ता प्रतीतिः तस्या अप्येवमित्यनवस्थाना[9]त् कस्यचिद[10]प्यप्रतिपत्तेः अन्धमूकमिदं[11] जगदापद्येत। स्यान्मतम् 'घटादेस्तावत् स्वविषयज्ञानार्थक्रियातः सिद्धिः, ज्ञानस्य च स्वयंप्रकाशत्वात् स्वत एव सिद्धिः, अतो नानवस्था' इति, [12]तर्हि यथैव ज्ञानस्य [13]अर्थक्रियामन्तरेण सत्त्वप्रतीतिः एवं घटादेरपि इति न अर्थक्रिया सत्त्वप्रतीतिहेतुः। अथायमभिप्रायः 'ज्ञानस्य स्वसंवेद्यरूपत्वात् स्वयमेव स्वस्य अर्थक्रिया इति अर्थक्रियात एव तस्या[14]पि सत्त्वप्रतीतिः' इति, तत्र वक्तव्यम् 'किं एकेन रूपेण ज्ञानस्य वेद्यवेदितृ[15]भावः किं वा द्वाभ्याम्?' इति। यद्येकेन रूपेण, तदा कार्यकारणभावासिद्धेः स्वत एव सत्त्वप्रतीतिः प्राप्ता। अथ द्वाभ्यां[16] वेद्यवेदितृ[17]भावः, तदापि वेद्यरूपस्य अन्यनिमित्त[18]सत्त्वावगमेऽपि वेदितृ[19]रूपस्य स्वयमेव सत्त्वप्रतीतिः [20]इति तद्वदेव सर्वस्य वस्तुजातस्य स्वयमेव स[21]त्त्वप्रतीतिः, न अर्थक्रियातः[22] इति

---

१. B: कारिलक्षण
२. E: सत्वस्य
३. E: क्रियाकारित्वनिमित्तं
४. All except B give निमित्तकं
५. B: कारणं सत्त्वं
६. E: तत्त्व
७. B: भाषित्वात्
८. B: प्रलपितमिव सर्वमेतदापद्येत
९. E omits नात्
१०. E omits अपि
११. E omits इदं
१२. A E omit तर्हि
१३. E: अर्थमन्तरेण घटादेरपि, thus omitting a few words.
१४. E: तत्रापि
१५. C: वेत्तृत्व-
१६. A C add रूपाभ्यां
१७. C: वेत्तृत्व-
१८. B: निमित्ते
१९. All except A give वेदन
२०. A omits इति
२१. A: सदर्थत्वप्रतीतिः
E: सत्त्वप्रतीतेः
२२. E: क्रियाकारिकसत्त्वमित्येतत् etc.

'अर्थक्रियाकारिलक्षणं सत्त्वम्' इति एतत् दुर्विदग्धबुद्धिविरचितमुत्पश्यामः। तदेवं उक्तेन न्यायेन परमार्थतः[1] स्थायिनः क्षणिकस्य वा कारणत्वासंभवेऽपि[2] मृदादिकारणस्य प्रत्यभिज्ञया स्थायित्वप्रतीतेः,[3] स्थायिन एव सहकारिविशेषसमवायात् क्रमेण युगपद्वा[4] अनेककार्यकरत्वप्रतीतेः,[5][6] स्थायिन एव मूलकारणस्य स्वाविद्यया तत्तदवस्थारूपेण अवभासमानस्य[7] समस्तविकारहेतुत्वं इति निश्चीयते। अतः कार्यकारणभावानुपपत्त्यापि द्वैतप्रपञ्चस्य मिथ्यात्वमध्यवस्यामः इति

इति तत्त्वशुद्धौ क्षणभङ्गवादनिराकरणप्रकरणम्।



१. A E: र्थत्वस्थायिनः

२. B: करण

३. A E omit this phrase.

४. B omits वा

५. E: अनेककारकत्व

६. A: कारणप्रतीतेः

७. A omits अव

## ॥ भेदाभेदनिरासः एकोनत्रिंशम् ॥

सदा यः सर्वज्ञः सकलसुरवर्यार्चितपदो
मृषैवाशेषस्य स्थितिजननभङ्गैकविभवः ।
न भिन्नो नाभिन्नः कथमपि कुतश्चित् परपुमान्
नमस्तस्मै शश्वत् विशदसुखबोधाय हरये ॥

इदमिदानीं विचार्यते ‘ किं कार्यं कारणात् भिन्नं आहोस्वित् कारणे[1] परिकल्पितम् ?’ इति । इह खलु बहवो भेदाभेदवादिनः संभवन्ति । क्षपणकास्तावदाचक्षते—सर्वमिदं जगत् भिन्नाभिन्नम् , द्व्यात्मकत्वेन[2] अवभासमानत्वात् । तथा हि । सन् घटः, सन् पटः, इति सदात्मना सर्वमेकात्मकं[3] प्रतिभाति । घटशकटादिरूपेण अनेकात्मकं[4] चोपलभामहे । ततश्च उभयात्मकत्वानुभवात् [[5]एकानेकात्मकमेवेदं जगत् , न अनेकमेव, नाप्यद्वैतमेव ।] न चेदं एकानेकात्मकत्वं वस्तुनो धर्मः, धर्मस्याप्येकानेकात्मकत्वात् , एकानेकात्मरूप[6]व्यतिरेकेण वस्त्वन्तरस्य अनुपलंभाच्च । ततः प्रत्यक्षसिद्धं[7] एकानेकात्मकत्वं सर्वस्य । अनुमानमपि ‘ विवादगोचरापन्नं सर्वं अनेकान्तम्[8] , सत्त्वात् , हेरम्बनरसिंहादिवत्[9]’ इति । ततश्च कार्यकारण[10]योरपि भिन्नाभिन्नतैवे[11]—इति ।

भाट्टास्तु[12] मन्यन्ते—न सर्वमिदं वस्तुजातं अन्योन्यं भिन्नाभिन्नम् , अनुपलंभात् , व्यवहाराभावप्रसङ्गाच्च[13] । न हि घटशकटयोः स्वरूपेणैवा[14]भेदमुत्पश्यामः, घटैः[15]

---

१. All except B read परेण
२. B: अध्यात्मत्वेन
३. B: त्मकतावत्
४. B: अनेकात्मकत्वाने ... कात्मकं
५. B omits the portion within brackets.
६. B: एकानेकरूप ;
E: एकात्मकव्यतिरेकेण
७. A E: सिद्धैकानेक
८. A: अनेकान्तं
९. A omits आदि ;
C omits नरसिंह
१०. A: करण
११. B: तैचेति for तैवेति
१२. E: दार्गास्तु
१३. B: अभावाच्च, प्रसङ्गाच्च ।
१४. B: स्वरूपेनाभेद
१५. B omits the visarga.

शकटम् इत्यादिसामानाधिकरण्याभावात्। यस्त्वयं सत्त्वा[१]दिरूपेणाभेदः स सामान्यनिबन्धनः। ततो न सर्वमनेकान्तम्। अपि च सर्वं सर्वात्मकं चेत्, सकलव्यवहारलोपप्रसङ्गः। तथा हि। जलाह[२]रणार्थी कदाचित् घटमिव शकटमप्या[३]ददीत, तस्य घटा[४]त्मकत्वात्। अघटात्मकमपि तत् इति नातिप्रसङ्गः इति चेत्, तर्हि इदमत्र विकल्पनीयम् 'किं अ[५]घटात्मकत्वं नाम घटात्मकत्वा[६]भावः किं[७] वा रूपान्तरम्?' इति। यदि घटात्मकत्वाभावः, तदापि विकल्पनीयम्[८] 'किं भावाभावयोः अन्योन्यात्मकत्वमेव उत अन्यत्वमेव उत[९] उभयात्मत्वम्?' इति। य[१०]द्यन्योन्यात्मत्वमेव, तदा शकटस्य घटात्मत्वाभावो नाम घटात्मत्वमेव इति जलाहरणार्थी शकटमप्याद्द्यात्, उदके[११] पिपासुश्च कदाचित् ज्वालामप्य[१२]ाददीत। अथ एतद्दोषपरिजिहीर्षया अन्यत्वमेव भावाभावयोः इति मन्वीथाः, तर्हि शकटस्य घटाभावरूपत्वात् तयोश्च अन्यत्वमेवेति न सर्वस्य अने[१३]कान्तत्वसिद्धिः। अथ भावाभावयोरप्यनेकान्तत्व[१४]मेव, तर्हि घटा[१५]भावोऽपि घटभावः, घटोऽपि तथैव इति भावाभावयोः अविशेषप्रसङ्गः[१६]। ततश्च न[१७] भावव्यवहारो नाप्यभावव्यवहारः इति अखिललोकयात्रा परिलुप्येत। अथ शकटस्य अघटा[१८]त्मत्वं नाम रूपान्तरमिति मतम्, तदा[१९] एकस्य स्वरूपद्वयाभ्युपगमात् तयोश्च सामान्यविशेषादिव्यतिरेके[२०]णानुपलम्भात् सामान्यविशेषादिभावेनैव भिन्नाभिन्नत्वं वस्तुनः, न स्वरूपेण, इत्यायातम्।

---

१. B: सत्त्ववादि
२. B: जलहरण
३. B omits अपि
४. A: घटात्मत्वात्
५. A: घटात्मकत्व
   E: किमघटात्मकत्वाभावं किं वा
६. B: घटात्मत्वाभावः
७. B omits from this up to तदापि
८. B: नीयः
९. B: अथोभयात्मत्वमपीति
१० E: यद्यन्योन्यत्वमेव
११. B: उदकपिपासु
१२. B omits अपि
१३. B: अनैकान्तत्व
१४. E: अनेकात्मत्व
१५. B: घटाभावोऽपि घटः, तदभावश्च घटोऽपि etc.
१६. B C: प्रसङ्गात्
१७. B: तदभाव for न भाव
१८. A: घटात्मत्व
१९. B: तदेकरूपद्वय
२०. B: व्यतिरेकानुपलंभात्

यत्तूक्तम् 'सर्वमनेकान्तम्[1], सत्त्वात्, हेरम्बनरसिंहवत्' इति, तत्र साध्यविकलो दृष्टान्तः। न खलु हेरम्बादेः[2] स्वरूपेणैव[3] अनेकात्मकत्वमस्ति, विशिष्टावयवविन्यासैकावयविद्रव्यत्वात्। ननु[4] नरकरिरूपे[5] प्रत्यक्षोपलब्धे[6]। नैतत्सारम्, अवयवसाम्यमात्रोपलम्भात्। न खल्ववयवसाम्यमात्रेण मैत्रस्य चैत्रात्मकत्वप्रसिद्धिरस्ति। तस्मात् असदेतत् 'सर्वमनेकान्तं सत्त्वात्' इति। किं तु सामान्यविशेषादेरेव भिन्नाभिन्नत्वमुपलभ्यते।

युक्तं चैतत्। तथा हि—'खण्डो गौः' इत्यस्मिन् प्रत्यये सामान्यविशेषयोः सामानाधिकरण्यात् अभेदोऽवगम्यते। 'कालाक्षी गौः' इत्यस्मिन् प्रत्यये तु गोत्वस्य व्यक्त्यन्तरात्मत्वे[7]प्रतीतेः[8] खण्डव्यक्तेः भेदोऽवगम्यते। तदेवं प्रत्ययाभ्यां सामान्यस्य व्यक्तेश्च[9] भेदाभेदौ अध्यवसीयेते, यथा[10] चक्षुःस्पर्शाभ्यां वह्नेः औष्ण्यप्रकाशवत्त्वे। स्यादेतत् 'तत्र एकैकविशेषण[11]ग्रहणानन्तरं उभयविशेषणे[12]विशिष्टवस्तुविषयप्रत्ययान्तरमस्ति[13]' इति। भवतु नाम। तर्हि इहापि तथैव भविष्यति। ततश्च स्वरूपेण सामान्यं व्यक्तेरभिन्नम्, व्यक्त्यन्तरात्मना[14] तु भिन्नम्; व्यक्तिरपि सामान्यस्वरूपादभिन्ना व्यक्त्यन्तरात्मना तु[15] भिन्ना; इति[16] सामान्यविशेषयोः भिन्नाभिन्नत्वं प्रत्यक्षसिद्धम्। तथा[17] कार्यकारणयोरपि 'मृदयं घटः' इति सामानाधिकरण्यात् अभे-

---

१. B: अनैकान्तं सत्त्वान्तरं वा वादीति तत्र स्वविकलो
२. B: हेरम्बादीनामपि
३. E: णैवात्मकत्व
४. All except B insert च here.
५. E: रूपप्रत्यक्षो ;
C: नरकनिरूपेण
६. A C: प्रत्यक्षोपलब्धेः
७. B: तु....न्तरात्मत्व
८. E: त्वस्य प्रतीतेः
९. B omits च
१०. All others except B give यथा च चक्षु etc.
११. B: विशेषाग्रहणादन्तर
१२. B omits विशेषण
१३. B: मेवास्तीति
१४. All except B omit तु
१५. A omits तु
१६. E adds सामान्यविशेषयोः भिन्ने सति
१७. Before this B inserts अयमेव न्यायो गुणगुणिनोरङ्गाङ्गिनोः। But the same sentence occurs below.

दोऽवगम्यते। मृदः[1] कलशाद्यो[2]त्मत्वावगमाच्च मृद्घटयोः भेदोऽवगम्यते। ततश्च कार्यकारणयोरपि भिन्नाभिन्नत्वं प्रत्यक्षमेव। अ[3]यमेव न्यायो गुणगुणिनोः अङ्गाङ्गिनोः विशिष्टस्वरूपयोरपि—इति।

इह खलु भाट्ट[4]मतावलम्बनेनैव भेदाभेदस्वरूपं अनेकधा कल्पयन्ति[5]। केचिदाचक्षते 'योऽसौ कार्यकारणयोः भेदः, स तयोः स्वरूपमेव, अभेदस्तु तादात्म्यलक्षण[6]ः सम्बन्धः' इति। अ[7]परे[8] तु 'भेदो नाम कार्यकारणयोः कश्चित् धर्मः, अभेदस्तु तदभावः' इति। अन्ये पुनः 'भेदाभेदावुभावपि वस्तुनो धर्मौ[9] रूपरसाविव भावरूपौ च' इति। सर्वे ए[10]ते स्वपक्षसमर्थनाय सामानाधिकरण्यवैयधिकरण्यानुपपत्तिमेवाचक्षते। न चैतत् न्यायविदो मन्यन्ते, ए[11]कस्य भेदाभेदवत्त्वे प्रमाणाभावात्।

यस्तावदयं प्रथमः पक्षः 'कार्यकारणयोः भेदः[12] स्वरूपमेव, अभेदस्तु धर्मान्तरम्' इति, तत्र वक्तव्यम् 'योऽसावनयोः अभेदधर्मः स किं ताभ्यामन्य एव, आहोस्वित् अनन्य एव, उत अन्यानन्यः?' इति। अन्यश्चेत्, स्वाश्रयेण स्वव्यतिरिक्तः सम्बन्धो वक्तव्यः, सम्बन्धस्व[13]रूपत्वात्। स्वयं न सम्बन्धान्तरमपेक्षते इति चेत्, न, संयोगे व्यभिचारात्। संयोगो हि स्वयं सम्बन्धोऽपि स्वाश्रयेण किल तादात्म्यसम्बन्धमपेक्षते। तादात्म्यसम्बन्धे एवायं नियमः इति चेत्, तदप्यसत्, न्यायविरोधात् एवं कल्पनायाः। तथा च विवादाध्यासितः सम्बन्धः [स्वा[14]श्रयेण स्वव्यतिरिक्तं सम्बन्धमपेक्षते, गुणत्वात्, सम्बन्धत्वाच्च, संयोगवत्। तथा च तादात्म्यं

---

१. E: मृददपिण्डाद्यात्मत्वावगमाच्च
२. A: कलशात्मत्व
३. A E omit अयमेव
४. E: भार्गव
५. B inserts इति
६. B omits the visarga.
७. E: परे तु
८. B: अपरे
९. B: धर्मः
१०. B: एवैते
११. B: एतस्य
१२. A B E: भेदस्वरूप
१३. B E: रूपत्वात्
१४. E omits the portion within brackets.

धर्मि-स्वव्यतिरिक्तसम्बन्धेन] स्वाश्रयतन्त्रं भवितुमर्हति, स्वाश्रयादत्यन्तभिन्नत्वात्, भूतलतन्त्रघटवत् इति। स्वाश्रयादत्यन्तभिन्नत्वे च[1] सम्बन्धत्वानुपपत्तिः[2], संप्रतिपन्न-संयोग[3]सम्बन्धस्य स्वाश्रयात् अत्यन्तभेदानभ्युपगमात्। तस्मात् तादात्म्यं न स्वाश्रयात् अत्यन्त[4]भिन्नम्। अथ अभिन्नमिति कल्प्यते[5], तदपि निरूप्यताम् 'किमिहापि तादात्म्यलक्षणोऽभेदः किं वा एकत्वलक्षणः?' इति। यदि तादात्म्यलक्षणः, तदा तस्याप्यन्यः तस्याप्यन्यः इत्यनवस्थानात् न क्वचिदभेदः सिध्येत्। अथैकत्वलक्षणः, तदापि वस्तुमात्रत्वात् तादात्म्यं नाम धर्मः इति मृषा भाषितं स्यात्। अथ उभय-दोषपरिहाराय भिन्नाभिन्नमित्युच्येत[6], तत्रापि अभेदशब्दार्थः तादात्म्यं चेत्, तस्य च भिन्नाभिन्नत्वे सति तदभेदोऽप्येवं त[7]दभेदोऽप्येवं [[8]इत्यनवस्था तदवस्थैव स्यात्। तस्मात् न प्रथमपक्षो युक्तः।

यदपि मतम् 'कार्यकारणयोः भेदो नाम कश्चित् धर्मः, अभेदस्तु तदभावः' इति, तदपि पर्यालोचनीयम्] 'किं भेदाभेदौ एकाश्रयौ उत भिन्नाश्रयौ?' इति। यद्येकाश्रयौ, तदा भेदाभेदौ न[9] युगपदेकस्मिन् संभवतः, भावा[10]भावयोः युगपदेकत्र सम-वायानुपपत्तेः। अथ भिन्नाश्रयौ, न[11] तर्हि कार्यं कारणात् भिन्नाभिन्नम्, एकस्य उभयाश्रयत्वानभ्युपगमात्। तस्मात् द्वितीयपक्षोऽपि न युक्तिमान्।

या[12] पुनरेषा कल्पना 'भेदाभेदौ कार्यकारणयोः धर्मौ रूपरसाविव भावरूपौ' इति, अत्राप्य[13]भिप्रायो वर्णनीयः 'किं[14] भेदाभेदौ कार्यकारणाभ्यां अत्यन्तभिन्नौ

---

१. A E omit च
२. B: सम्बन्धानुभव
३. E: संयोगस्य
४. E: अभिन्नं
५. B: कल्प्येत
६. E: उच्यते
७. A has only one तदभेदोऽप्येवं
८. E omits the part within brackets.
९. A E omit न
१०. B: भावतदभावयोः
११. B omits न
१२. E omits या
१३. A E drop अपि
१४. B omits किं

आहोस्वित् अभिन्नावेव, किं वा उभयरूपौ[1], अथ अनुभयरूपौ?' इति। यदि तावत्[2] आद्यः कल्पः, तदा भेदाभेदयोः कार्यकारणाभ्यां यो भेदः सोऽपि ताभ्यां भिन्नश्चेत्, तद्भेदोऽप्येवं इत्यनवस्थानात न क्वचित् भेदसिद्धिः। [[3]अभिन्नश्चेत् कार्यकारणाभ्याम्, तद्भेदाभेदयोः अन्यत्व[4]ाभावात् कार्यकारणरूप[5]ातिरेकेण भेदाभेदयोः धर्मासिद्धिः।] अथ[6] भिन्नाभिन्नः कल्प्येत, तर्हि तयोरपि स्वधर्मिणोः भिन्ना[7]भिन्नत्वे सति अनवस्था स्यात्। अतो न कार्यकारणाभ्यां तद्गतभेदा[8]भेदौ अत्यन्तभिन्नौ नाप्यभिन्नौ; अभेदस्य धर्मत्वे भेदाभेदादिभावे[9] च अनवस्थादोषप्रसङ्गात्, स्वरूपमात्रत्वे[10] भेदाभेदयोः[11] अभावप्रसङ्गात्। अथ कार्यकारणयोः भेदाभेदौ ताभ्यां भिन्नाभिन्नौ इति मतम्, तदा तद्भेदाभेदयोरपि भेदा[12]भेदान्तरकल्पनायां अनवस्था दुरवस्था समापद्येत[13]। अथ एतद्दोषपरिजिहीर्षया भेदाभेदौ न भिन्नौ नाप्यभिन्नौ नापि भिन्नाभिन्नौ कुतश्चित्, किं तु भेदाभेदावेव समस्तव्यवहारनिमित्तभूतौ प्रत्यक्षेण च उपलभ्यमानौ इति कल्प्येत, तर्हि इदं ब्रूहि 'भेदाभेदयोः धर्मिणौ[14] सम्बन्धाभावे कथं [15]तद्धर्मत्वम्?' इति। अस्ति चेत्सम्बन्धः, [16]सोऽपि न तावत् संयोगलक्षणः; गुणकर्मादावपि[17] भेदा[18]भेददर्शनात्, स्वयं च अद्रव्यत्वाभ्युपगमात्, द्रव्यधर्मत्वाच्च संयोगस्य। नापि समवायः, अनभ्युपगमात्। तादात्म्यं चेत्, भेदाभेदयोरप्यभेदाभ्युपगमात्[19] [20]स्वपक्षहानिः। अथ 'सम्बन्धाभावेऽपि

---

१. A E: उभयरूपाविति, omitting अथानुभयरूपौ
२. B omits तावत्
३. E omits the portion bracketed.
४. A: अन्यत्वानभ्युपगमात्
५. B: स्वरूप
६. E adds सः
७. A E: भिन्नत्वे
८. B: भेदौ
९. B: तत्रापि धर्मत्वे
१०. E: भेदाभेदानवस्था
११. A E: योरेवाभाव
१२. A E: भेदान्तर
१३. E: पद्यते
१४. E: धर्मिणोः
१५. A E omit तत्
१६. B omits सोऽपि
१७. E: इव for अपि
१८. E: भेददर्शनात्
१९. A E: उपगमे
२०. E omits स्व.

तत्र प्रतिभासमानत्वात् तद्धर्मत्वम्' इति, तर्हि भ्रान्तिपरिकल्पितौ[1] स्याताम्, स्वयं तत्र अविद्यमानत्वे सति प्रतिभासमानत्वात्, शुक्तिकादाविव रजतादिसंसर्गः। अथ मा भूत् धर्मत्वम्, स्वतन्त्रावेव सर्वव्यवहारहेतुभूतौ, धर्मत्वं[2] च औपचारिकम्; तर्हि घटादिवत् स्वतन्त्र एव उपलब्धिरपि स्यात्। न च आत्मवत् स्वतन्त्रयोरपि अन्योपाधिरेव उपलंभः इति युक्तं वक्तुम्, बाह्येन्द्रियग्राह्यत्वात्[3] गुणादिवत्। अन्यधर्मत्वे[4]-निमित्त एव अन्योपाधिकोपलंभनिश्चयात्। तदेवं भेदाभेदयोः वस्तुधर्मत्वप्रसिद्धेः[5], अस्वतन्त्रोपलब्धित्वाच्च[6] [धर्मत्वमाश्रयणीयम्। तच्च][7] धर्मिणा सम्बन्धमपेक्षते; स च सम्बन्धो दुर्निरूपः इत्युक्तम्[8]। तस्मात् यद्यप्यन्येऽपि[9] भेदाभेदपक्षाः दुर्युक्तिका एव, तथापि क्वचिदंशे प्रतीत्यनुसारात् आशङ्क्येरन्नपि[10]। अयं तु क्षपणकपक्षादपि पापीयान्[11] उम्बेकपक्षः इत्युपेक्ष्यते।

स्यान्मतम्[12] 'नह्येकस्मिन् वस्तुनि सामानाधिकरण्यं दृष्टम्, नाप्यत्यन्तभिन्नयोः अश्वमहिषयोरपि; ततश्च कार्यकारणयोः "मृदयं घटः" इत्यादि[13] सामानाधिकरण्यं अनुपपद्यमानं तयोर्भेदाभेदौ कल्पयति' इति[14]। अत्र नैयायिकादयः परिहारमाचक्षते—[15]"द्विविधो लोके सम्बन्धः, संयोगः समवायश्चेति। संयोगो नाम युतसिद्धः[16] सम्बन्धः। स[17] च प्रत्यक्षेणापि गम्यते यथा घटरज्जुसम्बन्धः। समवायः पुनः अयुतसिद्धानामेव सम्बन्धः। स च कार्यकारणादाविहप्रत्ययलिङ्ग[18]गम्यः। तथा हि '"इह तन्तुषु

---

१. B: निमित्तभूतौ
२. E: धर्मत्वौपचारिकं
३. E: ग्राह्यत्वं
४. A E: धर्मनिमित्त
५. B: सिद्धेः
६. B: तन्त्रोपलब्धि omitting अस्व
७. A omits the words bracketed.
८. E: इत्युक्तः
९. B: यद्यन्येऽपि
१०. A C: आशङ्कयेरन्नपि
११. B: पापीयो ... कपक्षः
१२. E: स्येदेतन्मतम्
१३. B: इति
१४. A E omit इति
१५. A E: विविधो
१६. B: अयुतसिद्धसम्बन्धः
१७. B omits स च
१८. A E omit लिङ्ग

पटः" इत्यादिप्रत्ययो धर्मि[1]सम्बन्धपूर्वको भवितुमर्हति, अबाधितेह[2]प्रत्ययत्वात्, यदित्थं तत्तथा, यथा "इह कुण्डे दधि" इत्यादिप्रत्ययः, तथा चायम्, तस्मात्तथा' इति। स एव कार्यकारणादौ [[3]सामानाधिकरण्यनिमित्तम्। ततश्च न सामानाधिकरण्यानुपपत्तिः भेदाभेदौ कल्पयति—इति। सोऽपि न प्रतीतिन्यायानुसारी[4]। तथा हि। न तावत् 'इह[5] तन्तुषु पटः' इति प्रतीतिः, अपि तु 'इमे तन्तवः पटः[6], मृदयं घटः' इति भेद[7]-विषया प्रतीतिः। अपि च भवन्नपि कथंचित् इहप्रत्ययो विपरीतो दृश्यते। न हि शाखासु वृक्षः[8] इति प्रतीतिः, किं तु वृक्षे शाखाः इति। तथा[9] च[10] पटे तन्तवः इति चानुभूयते, न[11] पुनस्तन्तुषु पटः इति। स च भवतामनिष्टः[12]। तस्मात् 'अबाधिते[13]-ह[14]प्रत्ययत्वात्' इत्यसिद्धो हेतुः। अपि च न्यायोऽपि न सङ्गच्छते। तथा हि। इदमत्र विवेक्तव्यम् 'किमसौ सम्बन्धः[15] समवायः सम्बन्धिभ्योऽन्यः[16] अनन्यो वा?' इति। यद्यन्यः[17], तदापि विकल्पनीयम् 'किमसौ स्वतन्त्रः परतन्त्रो वा?' इति। स्वतन्त्रश्चेत्, तथैवोपलभ्येत[18], आकाशादिवत् सम्बन्धोऽपि[19] न भवेत्। परतन्त्रश्चेत्, यत्तन्त्रोऽसौ तेन सम्बन्धो[20] वक्तव्यः, गुणादिषु तथा दर्शनात्। न चासौ सम्बन्ध[21]-

---

१. E: धर्म
२. A: ताहंप्रत्यय
३. E omits the part within brackets.
४. B: सारि
५. B omits इह
६. A E: पटाः
७. B; अभेद
८. B: वृक्षा
९. E: इति वदेतन्न परत इति चानुभूय तन्तुषु पट इति
१०. B omits च
११. A omits न
१२. A E: भवतोऽनिष्टः
१३. E: अन्याधित
१४. A corrects this into ताहंप्रत्यय
१५. B omits सम्बन्धः
१६. B: सम्बन्धोन्योऽनन्यो
E: सम्बन्धिभ्यां
१७. B: यद्यन्यः
१८. A: लभ्यते
१९. B omits अपि
२०. A E: सम्बन्धेन
२१. B: सम्बन्धि

त्वात् सम्बन्धान्तरं[1] नापेक्षते इति साम्प्रतम्, संयोगे व्यभिचारात्[2]। संयोगस्य सम्बन्धत्वेऽपि गुणत्वात् सम्बन्धान्तरापेक्षा, सामान्यादीनां तु परतन्त्राणामपि[3] असम्बन्धत्वादेव तदपेक्षा[4], समवायः पुनः स्वरूपसम्बन्धरूपो[5] गुणश्च, इति वैषम्यम्; तर्हि[6] सम्बन्धत्वादस्य[7] संयोगवदेव गुणत्वमप्यनुमीयताम्। अथ द्रव्यवृत्तिर्गुणः[8], समवायस्तु गुणादिषु च वर्तते, ततश्च अगुणः इति मतम्; तदप्यचारु[9] विरचितम्। आस्तां तावत् गुणादिषु[10] समवायः, कार्यकारणसमवायस्य[11] तु गुणत्वमनुमातुं शक्यते, द्रव्ययोः सम्बन्धत्वात्, संयोगवत्, इति। ननु संयोगस्य युतसिद्धसम्बन्धत्वात्[12] केवलद्रव्यवृत्तित्वाच्च गुणत्वम्; समवायः पुनः अयुतसिद्धसम्बन्धोऽद्रव्यवृत्तिश्च इत्यगुणत्वम्। तर्हि इदं भवान् पृष्टो व्याचष्टाम् 'किमिदमयुतसिद्धत्वं नाम?' इति। सम्बन्धितयैव सिद्धिरिति चेत्, तदपि तर्हि निरूपणीयम् 'किं[13] कार्यं सिद्धं सत् कारणे[14] समवैति, समवेतं वा सिध्येत्, युगपदुभयं वा?' इति। आद्ये कल्पे[15], कार्यस्य पूर्वसिद्धत्वात् अयुतसिद्धत्वहानिः। द्वितीयेऽपि स्वयमसतः[16] कार्यस्य कथं समवायः? अथ असतोऽपि[17] समवायः कल्प्येत, तर्हि येन असदात्मना[18] कार्यस्य समवायः तस्मिन् अनिवृत्ते[19] एव किं तत्संभवति[20]; आहोस्वित् निवृत्ते, इति वक्तव्यम्। अनिवृत्ते चेत्, कार्यं[21] सद-

---

१. A: सम्बन्धान्तरानपेक्षः; E: सम्बन्धान्तरेणापेक्षः
२. A E: व्यभिचारः
३. B omits अपि
४. A: तदपेक्षायाः; E: तदपेक्षया
५. B: स्वयं सम्बन्ध
६. E adds इति before तर्हि
७. B: सम्बन्धत्वात्संयोगवत्; E: सम्बन्धादस्य
८. E: वृत्तिसमवायस्तु etc.
९. E: तदप्यवरदविरचितम्
१०. B: गुणादिसमवायः
११. A: स्यानुगुणत्व; E: स्यागुणत्व
१२. B: अयुत
१३. B E omit किं
१४. E: करणे
१५. A E omit कल्पे
१६. E: द्रयं सतः कार्यं सदकार्यस्य कथं
१७. B omits अपि; E: सतोऽपि
१८. E: सदात्मना
१९. E: निवृत्ते
२०. A E: सम्बन्धः संभवति
२१. B omits कार्यं

सदात्मकं भवेत्, ततश्च स्याद्वादप्रसङ्गः। [१]निवृत्ते चेत्, तर्हि समवायेन सह तद्रूपनिवृत्तेः सिद्धरूपस्य कार्यस्य न स्यात् [२]कारणेन समवायः। अथ सम्बन्ध[३]: स्वरूपसिद्धिश्च कार्यस्य युगपत् इत्युच्येत, तर्हि तत्सिद्ध्य[४]वस्थं कार्यं सद्वा [५]स्यात्, असद्वा [६]स्यात्, उत उभयवि[७]लक्षणम्। सच्चेत्, सिद्धस्यैव सम्बन्धः इति अयुतसिद्धत्व-हानिः। असच्चेत्, तदा न कार्यस्य समवायः, तस्य अद्याप्यसिद्धत्वात्। सदसद्वि-लक्षणं चेत्, अनिर्वचनीयवादप्रसङ्गः। [८]एतेन गुणादिष्वपि समवायो निराकर्तव्यः। तस्मात् समवायः सम्बन्धिभ्यां अन्यश्चेत्, तस्यापि सम्बन्धान्तरं वक्तव्यमेव। अस्त्येव तस्यापि [९]अन्यसम्बन्धो विशेषणविशेष्यलक्षणः इति चेत्, तदपि दुर्भणम्; [१०]दण्डदेव-दत्तयोः विशेषणविशेष्यभावस्य सम्बन्धान्तरप्रयुक्तत्वात्। न [११]विशेषणविशेष्यभाव [१२]एवं सम्बन्धः। सम्बन्धान्तराभ्युपगमे [१३]च अनवस्था। न च वाच्यम् 'प्रतीत्यनवस्थैव व्यवहारविरोधिनी न [१४]सत्तानवस्था' इति, प्रतीतेरप्यनवस्थानात्। तथा हि। समवायः स्वयं विशेषणत्वात् [१५]स्वसिद्धौ सम्बन्धान्तरसिद्धिं अपेक्षते, तदपि स्वयं सम्बन्धान्तरसिद्धिं इति प्रतीतावप्यनवस्था समानैव। तस्मात् समवायो नाम [१६]न सम्बन्धिभ्यामन्यः संभवति। अथ ताभ्यामभिन्नः समवायः कल्प्येत, तदा कार्य-कारणमात्रमेवेति समवायस्वरूपापलापः स्यात्। तस्मात् समवायस्वरूपासंभवात् प्रमाणाभावाच्च '[१७]तन्निमित्तं कार्यकारणादिसामानाधिकरण्यम्' [१८]इत्ययं च पक्षो न शोभां बिभर्ति।

---

१. E: निवृत्तेर्हि, omitting चेत् त
२. E: कारणसमवायः
३. A B E drop the visarga.
४. B: वस्थः
५. E omits स्यात्
६. E omits स्यात्
७. B omits वि
८. E: एकेन
९. B: अन्यः सम्बन्धो
१०. E: दण्डदत्तयोः
११. A E omit विशेषण
१२. A omits एव and inserts a visarga after भाव; E omits एव सम्बन्धः
१३. E omits चानवस्था
१४. B: सत्तानवस्था, इयं तु सत्तानवस्थेति
१५. E: सिद्धौ
१६. A E omit न
१७. B: समवायनिमित्तं
१८. E: इत्यलं चक्षोर्न

का[१] तर्हि गतिः सामानाधिकरण्यस्य? इति चेत्, कारणे कार्यस्य अध्यासः इति ब्रूमः। ननु न[२] बाधो[३] दृश्यते; कथमिदं अध्यासनिबन्धनं[४] सामानाधिकरण्यम्? इति चेत्, 'अहं मनुष्यः' इत्यादिवत् इति ब्रूमः। श्रौतश्च बाधः सुप्रसिद्धः "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (Chānd., VI, i, 4.) इत्यादि।

अपरे पुनः कल्पयन्ति—"ब्रह्मैवेदं सर्वम्" (Nṛs. Ut. 7.) इत्यादिश्रुतेः ब्रह्मणः सर्वात्मत्वावगमात्[५] ब्रह्मात्मना सर्वमभिन्नं[६], प्रमातृप्रमेयादि[७]रूपेण भिन्नम्। अन्यथा एकान्ताद्वैतपक्षे[८] प्रत्यक्षादिप्रमाणविरोधात् लौकिकव्यवहारलोपप्रसङ्गः; कर्मकाण्डानारम्भश्च प्रसज्येत। एकान्तभेदाभ्युपगमे च[९] ज्ञानकाण्डस्य निर्विषयत्वात् अनारम्भप्रसङ्गः। तच्चोभयमयुक्तम्। ततश्च प्रत्यक्षादेः प्रामाण्यसिद्धये व्यवहारलोपपरिहारार्थं[१०] कर्मज्ञानकाण्डयोः आरम्भसिद्धये च ब्रह्मात्मना सर्वमभिन्नं प्रमाण[११]प्रमेयादिरूपेण भिन्नं, कार्यकारणादयश्च लोके भिन्नाभिन्ना एवेति[१२] युक्त[१३]माश्रयितुम्—इति।

तदपि मन्द[१४]मतिसन्तोषमात्रप्रयोजनं आपात[१५]रमणीयं उत्पश्यामः, भेदाभेदस्व[१६]रूपानिरूपणात्[१७]। तथा हि। इदमत्र चिन्त्यताम् 'किं येन रूपेण सर्वस्य भेदः तेनैव अभेदोऽपि, उत[१८] रूपान्तरेण?' इति। तेनैव[१९] चेत्, भेदाभेदरूपयोरेकत्वात्[२०]

---

१. E omits का
२. E: न हि
३. B: न बाधो
४. A: निबन्धनसामाना
५. E: सर्वात्मावगमात्
६. A: अभिन्नप्रमातृ
७. B: प्रामातृप्रमाणप्रमेय
८. E: ऐकात्माद्वैत
९. B omits च
१०. All except B add च
११. B: प्रमाणभिन्नं
१२. All except B omit इति
१३. E: युक्तमात्रमाश्रयितुमिति
१४. A E omit मन्दमति
१५. B omits आपात
१६. E omits स्वरूप
१७. B: निरूपणात्
१८. E omits उत
१९. E: तेनैवेति चेत्
२०. E adds च

वस्तुनो भेदोऽभेद एव वा स्यात्, न उभयसिद्धिः। अथ रूपान्तरेण, तर्हि तयो रूपयो[1] रूपिणः सकाशात् अत्यन्तभेद एव उत अभेद एव किं वा उभयमपि? इति[2]। आद्ये पक्षे रूपरूपित्वानुपपत्तिः, यथा[3] तयो रूपयोः अन्योन्यम्[4]। द्वितीये तु [[5]रूपिमात्रं वा स्यात् रूपमात्रं] वा[6] इति न रूपरूपित्वसिद्धिः[7]। तृतीये तु[8] रूपयो रूपिणः सकाशात् यौ भेदाभेदौ तौ 'किमेकेन रूपेण भवतः[9] किं वा द्वाभ्याम्?' इति। एकेन चेत्, कार्यकारणभेदाभेदयोरपि तथा स्यात्। तत्र च भेदा[10]भेदाभावे[11] उक्तः। द्वाभ्यां चेत्, तयोरपि स्वकीयरूपिणो भिन्ना[12]भिन्नत्वे सति अनवस्था स्यात्। तस्मात् न[13] न्यायसिद्धं भिन्नाभिन्नत्वम्।

अथ प्रतीतिसिद्धम्, तदापि न प्रमाणप्रतीतिसिद्धम्; एकस्य प्रमाणस्य युगपत् विधिव्यवच्छेदव्यापारद्वयासंभवात्, प्रमाणानां संभूय प्रमापकत्वानुपपत्तेश्च। तस्मात् लोकेऽपि कार्यकारणयोः[14] आध्यासिकमेव[15] भिन्नाभिन्नत्वम्।

यत्पुनरुक्तम्[16] 'कर्मज्ञानकाण्डयोः प्रत्यक्षादीनां च प्रामाण्यलाभाय लोकव्यवहारसिद्धये च भेदा[17]भेदाश्रयणम्' इति, तदुक्तोत्तरमेव, '[18]अद्वितीयप्रमाणस्य तत्त्वावेदकत्वेन प्रमाण्यात्; द्वैतप्रतिभासस्य पुनः आ संसारविमोक्षात् व्यवहारिकं अतत्त्वावेद-

---

१. B omits रूपयोः
२. All except A E omit इति
   E: किं स्फुटोऽयमिति
३. E omits यथा
४. A: अन्योन्य
५. A omits the part bracketed.
६. B: वावेति
७. A: प्रसिद्धिः
८. A: तृतीयेति
९. E: भवता
१०. A: भेदाभाव
११. E: भेदाभेद उक्तः
१२. B: भिन्नात्वाभिन्नत्वे;
    E: भिन्नत्वे
१३. B omits न
१४. A: कारणादेः
१५. E: आध्यासित
१६. B: यत्पुनरेव तदुक्त
१७. B: भेदाभेदौ आश्रयणीयौ इति
१८. A E: द्वितीय

कत्वेन[1] प्रामाण्यम्; ततश्च समस्तलौकिकवैदिक[2]व्यवहारः' इति। तस्मात् लोकेऽपि कार्यकारणयोः अभेद एव परमार्थतः[3], भेदस्तु आध्यासिकः। तस्मात्[4] अद्वितीयनिरतिशयानन्दप्रकाशलक्षणं[5] ब्रह्मैव परमार्थवस्तु; प्रमाणादि[6]भेदभिन्नं बाह्याध्यात्मिकम[7]खिलमिदं जगत् तत्रैव[8] अविद्यया अध्यस्तम् इति सिद्धम्।

इति तत्त्वशुद्धौ भेदाभेदनिराकरणप्रकरणम्।



---

१. E: वेदनलक्षणप्रामाण्यम्

२. A E omit वैदिक

३. B: परमार्थः

४. B: तथाद्वितीय

५. E: निरतिशयः प्रकाश etc.

६. B: प्रमातृप्रमाणादि

७. B: त्मिकलक्षणमखिल

८. All except B give अत्रैव

॥ देहात्मवादनिराकरणं त्रिंशम् ॥

द्रष्टा दृश्यो न खलु भवति स्पष्टभेदस्य दृष्टेः[1]
द्रष्टा देहो न भवति ततः[2] कुम्भवद्दृश्यभावात् ।
इत्थं देवो मुनिभिरनघैः चिन्तितोऽनन्तमूर्तिः
यस्तं वन्दे सह सुरगुरुं पद्मया पद्मनाभम् ॥

अथेदानीं विचार्यते 'किं देह एव आत्मा उत देहव्यतिरिक्तः?' इति । इह खलु लोकायतिका मन्यन्ते—चेतनस्यात्मत्वात्[3] अहंप्रत्ययालम्बनस्य[4] चेतनत्वात् 'अहं मनुष्यः' इति[5] देहस्य अहंप्रत्ययालम्बनत्वोपलंभात्[6][7] प्रत्यक्षमेव देहस्य आत्मत्वम् । न च 'मम शरीरम्' इति भेदप्रतीतेः देहस्य शयनासनादिवत्[8] अनात्मत्वमाशङ्कनीयम्, 'ममात्मा' इत्यत्र ममप्रत्ययस्य भेदालम्बनत्वव्यभिचारात्[9] । तस्मात् तत्र यथा औप[10]-चारिको भेदप्रत्ययः, तथेहापि[11] समाश्रयणीयम्, निरुपचरिताहंप्रत्ययालम्बनत्वात्[12] । न च अहंप्रत्ययालम्बनत्वस्य पुत्रादिष्वेव[13] आत्मत्वव्यभिचारः, तत्र अहंप्रत्ययस्य औप-चारिकत्वात् । ननु न[14] देहस्यापि देहोऽहमिति अहंप्रत्ययालम्बनत्वमस्ति; किं तु मनुष्यत्वादिधर्मद्वारेण; तदिह पुत्रादावपि पूजापरिभवादिधर्मद्वारेण[15] अस्त्येव, पुत्रादौ

---

१. E: दृष्टे
२. A E: कुतः
३. E: त्मत्वमहंप्रत्ययालम्बनत्वात्
४. A: यावलम्ब
५. A E: इति च
६. E omits अहं, indicated by dots.
७. A E: म्बनतो
८. B: शयनवसनादि
९. E: देहालम्बन
१०. A E: यथोपचारिको
११. A: ततहापीति ; E: तथानापीति
१२. A: चारित ; E: चारिका
१३. A E: पुत्रादिष्वात्मत्व
१४. E omits न
१५. E: परिभाविधर्म

पूजिते पूजितोऽहं, परिभूते[1] परिभूतोऽहं इत्यभिमानदर्शनात्; तत्र[2] च अहंप्रत्ययो देहेऽपि औपचारिकः इति। तदसत्, मनुष्यशब्दस्य जातिवाचकत्वात्, जातिशब्दानुविद्धप्रत्ययस्य तद्व्यक्तौ मुख्यत्व[3]प्रसिद्धेः। यथा[4] 'अयं गौः' इति, न तथा पुत्रादिषु प्रयोगोऽस्ति। तस्मात् मुख्य एव देहे अहंप्रत्ययः। न च अनुमानात् आगमात् वा देहस्य अनात्म[5]त्वप्रसिद्धिः, प्रत्यक्षातिरिक्तप्रमाणाभावात्। न च[6] अतीन्द्रियमदृष्ट[7]मप्यस्ति, येन तत्प्रकाशनाय प्रमाणान्तरं आश्रीयेत[8]। अतीतादिपदार्थस्य स्मरण[9]विपरिवर्तितयैव व्यवहारोपपत्तेः कृष्यादि[10]प्रवृत्तेश्च संभावनयापि[11] [12]संसिद्धेः प्रमाणानपेक्षणात्। तस्मात् 'अहं मनुष्यः' इति [प्रत्य[13]क्षदृष्टो[14] देह एव आत्मा—इति।

अत्रोच्यते। यद्यपि 'अहं मनुष्यः' इति] देहे मुख्य एव अहंप्रत्ययः, तथापि असौ[15] आध्यासिकः, न वस्तुकृतः; अहंप्रत्ययस्य चेतनावति वास्तवत्वप्रसिद्धेः, चेतनायाश्च देहे[16]धर्मत्वानुपपत्तेः। 'कथं पुनः चेतनाया देहधर्मत्वानुपपत्तिः?' इति। उच्यते। एषा किल[17] युष्मदीया प्रक्रिया—पृथिव्यप्तेजोवायवः तत्त्वानि, न [[18]पञ्चमं तत्त्वमस्ति; तानि] च भूतानि पृथिव्यादिबाह्यप्रपञ्चात्मना स्वभावादेव संहन्यन्ते, [[19]न पुनः द्रव्यान्तरमारभन्ते; तथा आध्यात्मिकमपि शरीरभावेन संहन्यते,] शरीरात्मना

---

१. A E omit परिभूते
२. B: ततश्च
३. E: मुख्यत्वासिद्धेः
४. A E: तथा
५. E omits त्व
६. A E: वा for च
७. A: अदृष्टमपवर्गोऽस्ति ;
   E: अदृष्टमार्गोऽस्ति
८. E: यते
९. E omits स्मरण
१०. E: कृत्याप्रवृत्तेश्च
११. E omits अपि
१२. E: सन्दिग्धेः
१३. B omits the part within brackets.
१४. E omits दृष्टो
१५. B E omit असौ
१६. B: देहे
१७. B: खलु
१८. A omits the words bracketed.
१९. A E drop the part within brackets.

च संहतेषु भूतेषु चैतन्यं उत्पद्यते; चैतन्यविशिष्टैकायः[1] पुरुषः—इति। तत्र वक्तव्यम् 'किं स्वतोऽचेतनेषु भूतेषु[2] संघाते सति[3] चैतन्यमुत्पद्यते, किं वा[4] स्वतः चेतनेषु भूतेषु संघातः?' इति। आद्ये कल्पे[5], संघातनिमित्तं वक्तव्यम्। न तावत् तान्येव भूतानि, तेषां कर्तृत्वेन तुल्यस्वभावत्वात्। न खलु गुणप्रधानभावमन्तरेण संघातः संभवति। चैतन्यमेव चेत् निमित्तम्, न; तस्यापि फलत्वात्, फलिनो भावे सति आक्षेपकत्वानुपपत्तेः[6]।

स्यादेतत् 'भूतान्येव फलभाञ्जि; ततः तदर्थत्वात् फलस्य आक्षेपकत्वोपपत्तिः' इति; तदप्यसत्, तस्य चतुर्णां साधारणत्वात् पुनरपि तेषां गुणप्रधानभावानुपपत्तेः। न च 'गुणप्रधानभावमन्तरेणापि सभावत् समूहोपपत्तिः' इति वाच्यम्; सभायां तु सर्वेषां चेतनत्वात् गुणप्रधानभावस्यापि संभवात् समूहाक्षेपकत्वोपपत्तेः। भूतानां पुनः अचेतनत्वात् कारणत्वेन[7] गुणभावस्य[8] सर्वेषां अविशिष्टत्वाच्च न सङ्घाताक्षेपकत्वसंभवः। 'अस्तु तर्हि चेतनानामेव सतां सङ्घातः' इति। तदप्यसत्, सङ्घातादन्यत्रापि चैतन्योपलब्धिप्रसङ्गात्। अथ विद्यमानस्यापि[9] चैतन्यस्य मदिरादौ इव मदशक्तेः सङ्घाते सति अभिव्यक्तिः इति मतम्, तत्रापि वक्तव्यम् 'किं युगपत् सर्वेषु भूतेषु[10] चैतन्यमभिव्यज्यते, किं वा क्रमेण?' इति। युगपच्चेत्, सहैव सर्वविषयोपलब्धिप्रसङ्गः[11]। न च क्रमेण, क्रमकारणाभावात्। 'कार्यमेव अनुपपद्यमानं क्रममाक्षिपति' इति चेत्, तन्न; प्रत्येकं भूतानां चैतन्यवत्त्वात्, असाधारणविषयलाभाच्च[12] क्रमानुपयोगात्। अस्मिन्[13] पक्षेऽपि चेतनानां गुणप्रधानभावा-

---

१. B: विशिष्टस्तु कायः
२. A E omit भूतेषु
३. A E drop सति
४. B omits वा
५. B: पक्षे
६. A E: पपत्तिः
७. A C E: कारकत्वेन
८. A: गुणाभावस्य
९. A E omit अपि
१०. A E omit भूतेषु
११. B: विषयानुभवप्रसङ्गः
१२. E: विषयाभावाच्च; C: अलाभात्
१३. E omits अस्मिन्

भावात् समानैव सङ्घातानुपपत्तिः। स्त्रीपुंसयोः चेतनार्थत्वेन शरीरमेव संहन्यते न चेतनौ[1] इत्यनुदाहरणम्। तस्मात् व्यतिरिक्तात्मानभ्युपगमे[2] सङ्घातानुपपत्तेः, 'भूत-सङ्घाते शरीरे चैतन्यमुत्पद्यते, चैतन्यविशिष्टस्तु[3] कायः पुरुषः' इत्यादि सर्वं अनुप-पन्नम्। ततश्च देहस्य चैतन्याभावात् अहंप्रत्ययो[4] देहे मिथ्याध्यासनिमित्तः इति निश्चीयते। न चात्र[5] विवदितव्यम् 'देहे गौणोऽहंप्रत्ययो[6] न मिथ्या' इति। गौणो नाम ज्ञातभेदयोः एकत्वावभासः, यथा 'सिंहो देवदत्तः' इति। अज्ञातभेदयोस्तु एकत्वावभासः अध्यास एव, यथा[7] 'ह्रस्वोऽयमकारः' इति। न च अहमिति व्यतिरिक्त[8]विषयः प्रत्ययः[9], विचारसाध्यत्वात् व्यतिरेकस्य। अन्यथा आ गोपालाविपाल-[10]पण्डितं व्यतिरिक्तात्मप्रसिद्धौ आत्मविचारानर्थक्यप्रसङ्गः। तस्मात् 'अहं मनुष्यः' इति देहविषयोऽहंप्रत्ययो मिथ्याध्यास एव। न चैतत् अपरोक्षावभासत्वेऽपि[11] प्रमाणम् इति युक्तम्, अनिरूपितविषयत्वेन आभासत्वस्य दर्शितत्वात्। अपि च देहोऽय-मनात्मा भवितुमर्हति, रूपादिमत्त्वात्, सावयवत्वात्[12], बाह्येन्द्रियग्राह्यत्वात्, उत्पत्ति-विनाशवत्त्वात् च[13], घटादिवत्।

यत्पुनरुक्तम् 'प्रत्यक्षमेवैकं[14] प्रमाणम्, न अनुमानमागमो वा[15] अस्ति' इति, कुतः पुनः प्रमाणात् इदम्[16]अध्यज्ञायि भवता? न तावत् प्रत्यक्षेण, अनुमानादिप्रमाण-तदभावयोः अप्रत्यक्षत्वात्। न च प्रत्यक्षाभाववादिनोऽपि प्रत्यक्षयोग्यस्य अभावः

---

१. A: चेतनापि
२. B: आत्मनानभ्युप
३. A omits तु
४. A: प्रत्ययदेह
५. E adds अपि
६. A: अयं for अहं
७. All mss. add एव after यथा, which seems unnecessary.
८. B: व्यक्तिविषयः
९. A E omit प्रत्ययः
१०. A E: गोपालाविपापण्डितं
११. B: भासोऽपि
१२. A omits सावयवत्वात्
१३. B omits च
१४. B: एव प्रमाणन्
१५. B: वेति
१६. B: इदं व्यज्ञायि

प्रत्यक्ष इष्टः। अथ अनुमानादवगच्छसि, तर्हि सिद्धमनुमानप्रामाण्यम्। न चाप्रमाण-विज्ञानेन कश्चिदर्थो निश्चेतुं शक्यः। तैथा आगमप्रामाण्यमपि दुर्निवारम्। तथा हि। लौकिकैवाक्यं प्रमाणमप्रमाणं वा? प्रमाणं चेत्, सिद्धमागमस्य प्रामाण्यम्। किं तत्र अपौरुषेयेर्णागमेन अपराद्धम्? अथ लौकिकवाक्यमप्यप्रमाणम्, तर्हि पर-वादिना वादस्ते न स्यात्, अन्योन्यप्रयुक्तवाक्ययोः परस्परप्रामाण्यात्। अतश्च अपौरुषेयागमसिद्धं अदृष्टमपवर्गादि सर्वमेष्टव्यम्। तस्मात् आगमानुमानाभ्यां देह-व्यतिरिक्त आत्मा इति सिद्धम्।

इति तत्त्वशुद्धौ देहात्मवादनिराकरणप्रकरणम्।



१. B: अथ

२. B: दुर्निवारः

३. A: ते लौकिकवाक्यं

४. A: षेयागमेन

५. E: परिवादिना

६. A: परस्परप्रामाण्यानभ्युपगमात्; E: प्रामाण्याभ्युप

## ॥ विज्ञानवादनिराकरणं एकत्रिंशः ॥

जडपरिमितमिथ्याकार्यतादिस्वभावैः
    कथमपि च कदाचिन्नैव सङ्गोऽस्ति यस्य ।
क्षणिकमपि य[मोहुः केचिदीशं भ्रमन्तेः
    तमहमजमजस्रं नौमि शौरिं मुरारिम् ॥

इदमिदानीं चिन्त्यते 'किं क्षणिकविज्ञानमेव अहंप्रत्ययालम्बनं उत स्थिरस्वभाव आत्मा?' इति । तत्र क्षणिकविज्ञानमेव अहंप्रत्ययालम्बनं भवितुमर्हति, स्थाय्यात्मनि प्र]माणाभावात् । ननु सोऽहं इति प्रत्यभिज्ञा प्रमाणम् । का तर्हि प्रत्यभिज्ञा नाम ? पूर्वानुभवसंस्कारसहितात् इदानींतनप्रमाणकारणात् उत्पद्यमानं एकस्य कालद्वयसम्बन्धविषयं प्रत्यक्षं प्रत्यभिज्ञा इति चेत्, न तावदियं प्रत्यभिज्ञा स्वयंप्रकाशात्मवादिपक्षे संभवति; स्थायिनः स्वयंप्रकाशस्य संस्काराभावात्, प्रमाणकारणाभावाच्च स्वयंप्रकाशस्य । अथ प्रमाणान्तरगम्य एवात्मा इति मन्येत, तदापि न संभवति प्रत्यभिज्ञा ; अतीतवर्तमानधर्मद्वयस्य युगपदेकस्मिन् संभवानुपपत्तेः ततः तद्विषयप्रत्ययासंभवात्, पर्यायेण सम्बन्धस्य धर्मद्वयसम्बन्धावगमात् प्रागेव आत्मेति प्रत्यभिज्ञामन्तरेण अवगन्तुं अशक्यत्वात् । तस्मात् नास्त्यात्मनि प्रत्यभिज्ञा, नापि घटादिषु इति न कचिदपि स्थिरवस्तुसिद्धिः । ततः क्षणिकविज्ञानमेव अहंप्रत्ययालम्बनं परिशिष्यते ।

---

१. E omits the part within brackets.
२. A: भ्रमन्तं
३. E: विषय for द्वय
४. B: सम्बन्धि
५. A: स न
६. A: सम्बन्धा
७. B: सम्बन्धात्
८. B E: धर्मिणि
९. B: आत्मप्रत्यभिज्ञा
१०. A: ज्ञानादि for नापि

ननु विज्ञानमात्र[१]मेव चेत्[२] अहंप्रत्ययालम्बनम्, तदा कथं 'अहं[३] जानामि' इति विज्ञानकर्तृत्वाव[४]भासः ? अनादिवासनापरिप्रापितात् विपर्यासदर्शनात् इति ब्रूमः । तदुक्तम्—

अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
[[५]ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ इति ।

स्यादेतत् 'ग्राह्यग्राहकसंवित्तिभेदे सत्यसति च बाधे कथं भेदावभासो विपर्यासः] कल्प्यते?' इति । उच्यते । न तावत् संवित्संवेद्ययोः भेदावभासो वस्तु[६]कृतः, तयोः एकाकारावभासनात् । स चायमाकारः किं[७] संवेद्यस्यैव किं वा संविद एव इति विशये संवित्स्वरूपस्य उभयवादिसंप्रतिपन्नत्वात्, संवेद्यस्य च अनिश्चितसद्भा[८]वात्, भेदावभासस्य च[९] लोके भ्रान्त्यापि दृष्टत्वात्, नीलादिरूपे संवेदने सति तदतिरिक्तनीलाद्यर्थे प्रमा[१०]णाभावात्, नीलात्मिका[११] संवित् इति प्रत्यक्षम् । अनुमान[१२]मपि 'विवादगोचरापन्नौ संवित्संवेद्यौ अभिन्नौ भवितुमर्हतः, सहोपलंभनियमात्, यौ[१३]वभिन्नौ न भवतः न तौ सहोपलंभनियमौ यथा नीलपीतज्ञाने, न तथा संवित्संवेद्यौ सहोपलंभनिय[१४]तौ [१५]न भवतः, तस्मात् अभिन्नौ' इति । तस्मात् ज्ञानस्य क्रियात्मकत्वात् 'अहं जानामि' इति यस्तत्प्रतिकर्तृत्वावभासः, सोऽपि स्वप्नादौ इव पै[१६]लायनं भ्रान्तिमात्रमेव । तस्मात् विज्ञानमा[१७]त्रं क्षणिकमेवात्मा इति योगाचाराः प्रतिपेदिरे ।

---

१. B E omit मात्र
२. B omits चेत्;
E: चाहंप्रत्यया
३. B: अहमिदं
४. E: त्वाभासः
५. A drops the portion within brackets.
६. E: वस्तुतः
७. A: किं वा
८. B: सदभावात्
९. B omits च
१०. E; प्रमाणाभा ... नी
११. E: नीलार्थिका
१२. E omits अपि
१३. B: योवद्भिन्नौ भवतः
१४. B: नियमौ
१५. A omits न, a subsequent correction.
१६. E: लखायनं
१७. E adds एव

तत्रेदमाचक्ष्महे। न तावत् विज्ञानानां क्षणिकत्वमस्ति, प्रमाणाभावात्। ननु नीलसंवित्[1]काले पीतसंविदोऽभावात्, स्थिरस्य च अवधिहेत्वसंभवात्, [2]स्वरसभङ्गुरत्वनिबन्धन एव नीलसंवित्काले पीतसंविदोऽभावः इति स्वरसभङ्गुरत्व[3]मनुमानेनावगच्छामः—विगीतं विज्ञानं [4]क्षणिकं भवितुमर्हति, [5]निर्हेतुकविनाशित्वात्, [6]यदेवं न भवति तत् तथा न भवति यथा गगनादि, [7]तथेदं न भवति, तस्मात् क्षणिकम्—इति। तदेतदयुक्तम्, विज्ञानस्य विनाशित्वासिद्धेः।

स्यादेतत् 'उत्तरसंवित्काले पूर्वसंविदोऽनुपलंभात् विनाशोऽवसीयते' [8]इति। तदप्यसत्; जन्मविनाशसिद्धौ च संविदः पूर्वोत्तरभावसिद्धिः पूर्वोत्तरभावसिद्धौ च जन्मविनाशसिद्धिः इति परस्पराश्रयत्वात्। कथं तर्हि संवेदने भेदावभासः? त्वदीयानाद्यविद्यया इति वदामः। [9]ततश्च विज्ञानस्वभावस्यैवात्मनः स्थायित्वात्, स्थिरस्य च अवधिहेत्वनुपलंभात् नित्य एवात्मा।

[10]यत्पुनरुक्तम् 'स्थायिनः स्वयंप्रकाशस्यात्मनः संस्कारा[11]भावात् प्रमाणकारणाभावाच्च न प्रत्यभिज्ञा' इति, तत्प्रत्युच्यते। [12]स्वयंप्रकाशस्यात्मनो दर्पणा[13]दाविव सवितृकिर[14]णस्य अन्तःकरणोपाधौ अभिव्यज्यमानत्वात्, स्वरूपतो नित्यत्वेऽपि सो[15]पाधिकावभासस्य अस्थिरत्वात् तज्जनितसंस्कारोपपत्तेः, अन्तःकरणस्य च स्वयंप्रकाशाभिव्यक्तिहेतुत्वेन तत्प्रमाण[16]कारणत्वव्यपदेशात्, उप[17]पन्नमेव पूर्वानुभवसंस्कारसहितात् इदानींतनप्रमाणकारणात् आत्मनि प्रत्यभिज्ञानम्।

---

१. A: कालेऽपि तत्संविदो
२. E: स्थिरभङ्गुरत्व
३. E: त्वानुमानेन
४. E: न क्षणिकं
५. E omits निर्हेतुक
६. E: यो भवन् न भवति यथा गमनादि न तथेदं न भवति
७. B: न तथेदं न भवति.
८. E omits इति
९. E: तच्च
१०. A E: यं पुनरुक्तः
११. E: संस्कारसंभवात्
१२. E omits स्वयं
१३. E: दावपि
१४. E: करण for किरण
१५. E: सोपाधिकाभासस्य
१६. B: कारणत्व
१७. A: देशाद्युपपन्न

यदप्युक्तम् ‘ अतीतवर्तमा[1]नस्य धर्मद्वयस्य युगपदेकस्मिन् अन्वया[2]संभवात् तदवगमानुपपत्तेः, पर्यायेण सम्बन्धावगमे च[3] धर्मद्वयसम्बन्धावगमात् प्रागेव तस्मि[4]न् वस्तुनि प्रत्यभिज्ञापेक्षत्वात् प्रत्यभिज्ञा अनुपपन्ना ’ इति, तदपि न दोषमावहति ; अतीत[5]वर्तमानधर्म[6]द्वयस्य अन[7]न्वयित्वेन वस्त्ववच्छेदकत्वात्। द्विविधं वस्तुनो विशेषणं कार्यान्वयि, प्रतीत्य[8]न्वयि चेति। तद्यथा ‘ नीलमुत्पलम् ’ इत्यादि कार्यान्वयि विशेषणम्, ‘ राजपुरुषः ’ इत्यादि प्रतीत्यन्वयि विशे[9]षणम्। तत्र कालद्वयस्य[10] प्रत्यभिज्ञासमये [11]अनन्वयितया विशेषणत्वात् उभयकालावच्छिन्नस्वरूपमात्रमेव प्रत्यभिज्ञाविषयः ; तत्फलं च उपाधिद्वयसम्बन्धनिमित्तभेदविभ्रमनिवृत्तिरेव। अतो न [12]कौचित् अनुपपत्तिः।

यदपीदमुक्तम् ‘ संवित्संवेद्ययोः एकाकारावभासनात् तस्य च संप्रतिपन्नसंविदाकारत्वात् न तद्व्यतिरिक्तं [13]संवेद्यं अस्ति ’ [14]इति, तदपि सूक्ष्मेक्षिकानिरीक्षणाक्षमैः उत्प्रेक्षितमीक्षामहे, अवभा[15]स्यावभासरूपेण संवित्संवेद्ययोः आकारभेदस्य सिद्धत्वात्। अवभा[16]सेनैकस्वभावं संवेद[17]नम् ; संवेद्यं च अवभास्यैकस्वभावम्[18]; कुतस्तयोः एकाकारावभासः? यः पुनः घटाद्याकारः [19]स संवेद्यस्यैव [20]न संवेदनस्य, तद[21]वभास्यरूपत्वात्।

---

१. B: मानधर्म
२. E: न् न द्वयासंभवात्
३. E omits च
४. A: तस्मिन्नवस्तुनि
५. A E: अतः वर्तमान
६. A: धर्मि
७. E: अन्वयित्वेन
८. E: प्रत्यन्वयि
९. B omits विशेषणम्
१०. A E: द्वयप्रत्य
११. E: न अन्वयितया विशेषणत्वोपपत्तिः। यदपीदमुक्तम्, thus omitting a few words.
१२. B: कदाचित्
१३. A: वेद्यं
१४. E omits इति
१५. A E: भासस्यावभास
१६. All except B give भासेनैक
१७. A E: संवेदनस्य
१८. B: स्वभावकृतः तयोरेकाकारावभासः
१९. The insertion of स is called for though not found in any ms.
२०. E omits न
२१. E: तदभास ; A B: तदवभास

यदपीदमवादि[1] 'सहोपलंभनियमात्[2] संवित्संवेद्ययोः[3] अभेदः' इति, तदपि न प्रमाणपद्धतिमध्यास्ते, हेतोरसिद्धत्वात्। न हि संवेद्येन संवित् सहैवोपलभ्यते; नित्यत्वात् स्वयंप्रकाशत्वाच्च अस्मन्मते संवेदनस्य सर्वदा[4] सिद्धत्वात्, अतद्रूपत्वाच्च संवेद्यस्य। अतोऽन्यतरासिद्धो हेतुः। विरुद्धश्च, एकस्यां क्रियायां संवित्संवेद्ययोः सहभावस्य भेदसाधकत्वात्[5]। न हि संविदैव सह भाति। ततश्च 'सहोपलंभनियमात्' इति भेदसाधकत्वात् विरुद्धो हेतुः। अपि च उपायोपेययोः आलोकतत्प्रकाश्ययोः सहोपलंभनियमेऽपि[6] न अभेदोऽस्ति। अतश्चानैकान्तिको हेतुः। अन्तर्बहिर्भावभेदप्रत्यक्षविरोधात्[7] अभेदानुमानस्य कालात्ययापदिष्टता च। तस्मात् असदेतत् 'संवित्संवेद्ययोः अभेदः, संवेदनं[8] क्षणिकम्, क्षणिकविज्ञानमात्रे च[9] ग्राह्यग्राहकसंवित्तिभेदः कल्पितः, बाह्यार्थश्च[10] नास्ति, विज्ञानमात्रं क्षणिकं अहंप्रत्ययालम्बनम्' इत्यादि। ततश्च स्थिरस्वभाव एवात्मा संसारकञ्चुकपरिवृतः अहंप्रत्ययालम्बनः[11] इति सिद्धम्[12]।

इति तत्त्वशुद्धौ विज्ञानवादनिराकरणप्रकरणम्।



---

१. E: यदपीदं वा
२. A: नियमत्वात्
३. E omits संवित्
४. B: सर्वथा
५. E omits भेद
६. B: लंभनीयमपि
७. B: संवेद्यं
८. B omits च
९. E: तु for च
१०. E: संसारिकश्च
११. A E: यालम्ब इति
१२. A E: स्थितम्

## ॥ संसारमिथ्यात्वं द्वात्रिंशम् ॥

यस्मिन् असङ्गे सुखबोधविग्रहे कर्तृत्वमध्यस्तमनाद्यविद्यया[1] ।
तमिन्दिरायाः प्रियमन्दिरं हरिं नमामि लीलारचिताखिलं[2] मुदा ॥

इदमिदानीं जिज्ञास्यते ‘किं आत्मनि संसारः पारमार्थिकः किं वा आध्यासिकः?’[3] इति। आत्मनि संसारस्य प्रतीयमानत्वात्, प्रतीतेश्च स्वतःप्रामाण्यात्, कारणदोषबाधकप्रत्ययानुपलंभात्, प्रमाणप्रतीतत्वस्य[4]ैव[5] परमार्थत्वाभिधानात् आत्मनि संसारः परमार्थो युक्तः। अपि च यदि संसारः परमार्थो न भवेत्, तदा[6] कथं इष्टानिष्टप्राप्तिपरिहाराय साधनविधायि शास्त्रं प्रमाणं भवेत्? न हि रज्जुसर्पनिवृत्तये मन्त्रौषधादिसाधनमुपदिश्यते[7], किं तु रज्जुस्वरूपज्ञानमेव। [[8]ततश्च ज्ञानकाण्डमेव] आरब्धव्यं न कर्मकाण्डम्, अनुपयोगात्। अपि च आत्मस्वरूपसाक्षात्कारे[9] सति संसारस्य मिथ्यात्वावगमः[10], किं[11] वा ततः प्रागेव? न तावदाद्यः[12]; आत्मस्वरूपसाक्षात्कारे सति तदुत्तरकालं प्रपञ्चस्यैवाभावात्[13] सत्यमिथ्यादिव्यवहारानुपपत्तेः। अथ किञ्चित्कालं बाधितानुवृत्तिः अभ्युपगम्येत, तदापि स्वयं कृतार्थत्वात् स्वव्यतिरिक्तान्तराभावनिश्चयात्[14] स्वपक्षपरपक्षविभागाभावात्[15] शास्त्रानारंभप्रसङ्गः। नापि[16] तत्त्वाव-

---

१. B: कर्तृत्व .... नाप्त
२. B: लीला ... खिलं
३. B: अध्यस्तः,
   E: आध्यासित
४. B: प्रतीतित्व
५. A E omit एव
६. A E: तथा
७. E: तन्त्री
८. E omits the words bracketed.
९. B: आत्मनि ;
   E: अपिचात्मस्वरूपं, तदापि साक्षात्कारे सति etc.
१०. A E: गतिः
११. E omits किं वा
१२. B E omit आद्यः
१३. B: एवात्यन्तमिथ्यादिव्यवहारानुपपत्तेः
१४. E omits अन्तर
१५. B: अभावाच्चानारंभप्रसङ्गः
१६. A E: तथापि

बोधात् प्रागेव मिथ्यात्वावगमः; प्रत्यक्षसिद्धस्य अनुमानादिना बाधानुपपत्तेः बाधमन्तरेण मिथ्यात्वानवगमात्। न च आगम एव आत्मविषयं परोक्षज्ञानमुत्पाद्य प्रपञ्चं बाधते इति युक्तम्, निरुपाधिकात्मस्वरूपस्य अपरोक्षैकस्वभावतया तत्र परोक्षज्ञानसंभवात्, सोपाधिकज्ञानस्य विभ्रममात्रत्वात्, तेन अन्यस्य बाधानुपपत्तेः।

अपि च इदं भवान् प्रष्टव्यः 'किं आत्मनि संसारसंबन्धात् कोऽपि विशेषोऽस्ति वा न वा?' इति। 'अस्ति चेत्, स परमार्थः किं वा काल्पनिकः?' इति। यदि परमार्थः, तर्हि एकं विशेषं आत्मनि परमार्थमभ्युपगच्छतः सुखदुःखादिसंसारे कः प्रद्वेषः? अथ अविद्यात्मकोऽसौ विशेषः आत्मनि, तर्हि संसारभावाभावयोरपि विशेषाभावात् तन्निवृत्तये शास्त्रारंभः अनर्थकः स्यात्। स्यादेतत् 'वास्तवविशेषाभावेऽपि प्रतिभासकृतविशेषात् अर्थवदेव तन्निवर्तनेन शास्त्रम्' इति। तदपि मनोरथमात्रम्। लोके सर्पसम्बन्धावभासयोः रज्जुगतविशेषाभावेऽपि तद्द्रष्टृगतविशेषादेव सर्पभ्रान्तिसंभवभयसंबन्धात् तन्निवृत्तये रज्जुस्वरूपोपदेशः अर्थवान्; इह पुनः आत्मनि अनात्माध्यासे अधिष्ठानं द्रष्टा च इत्युभयं आत्मैव; तत्र न कदाचिदपि विशेषः; ततश्चात्मनि संसारभ्रान्त्यसंभवे कथं तन्निवृत्तये शास्त्रमारभ्येत? नास्ति चेत् आत्मनि संसारकृतो विशेषः, तर्हि नतरामेव मोक्षशास्त्रमारभ्येम्। तस्मात् संसारस्य बाधित-

---

१. A E: अनुमानबाधानुपपत्तेः
२. B adds च
३. B: मिथ्या ... न च
४. B: आत्मनि .... परोक्ष
५. B: बाधक ... युक्तम्
६. B: अन्यस्यानुपपत्तेः
७. E omits अपि
८. B: आध्यासिकः
९. B: विशेष ... वेऽपि
१०. A: गत
११. B: सम्बन्धासम्बन्धावभासयोः
१२. A E: दृष्टगत
१३. A: तान्ति
१४. All except A E give भ्रान्तिसम्बन्धात्
१५. A: देशे
१६. B omits न
१७. E: सुतरां
१८. A E: भ्यते

प्रतीतिसिद्धत्वात्, तन्मिथ्यात्वे च कर्मज्ञानकाण्डयोः अनारंभप्रसङ्गात् आत्मनि पारमार्थिकः संसारः इति तार्किकाः मीमांसकाश्च मन्यन्ते ।

अपरे पुनः ' आत्मनः [1]असंसारस्वभावत्वेऽपि अन्तःकरणाद्युपाधिकृत[2]संसारः अस्त्येव, स्फटिकमणे[3]रिव उपाधिनिमित्तो लौहितिमा ' इति[4] कल्पयन्ति ।

तान् प्रति ब्रूमः । तत्र ये सर्वगतात्मवादिनः तैः ' अध्यासमन्तरेण कथं आत्मनि सुखदुःखादि[5]संसारसंभवः?' इति वक्तव्यम् । तथा हि । आत्मनो ज्ञानादयो गुणाः इत्यभ्युपगमः[6]। गुणश्च[7] निरवयवद्रव्येऽपि[8] यावद्द्रव्यभावी दृष्टः, यथा परमाणुगतरूपादिः, यथा वा आत्मगतसंख्यापरिमाणादिः । न च आत्मगतसंयोगविभागयोः व्यभिचारः इति[9] वाच्यम् ; तयोरद्यापि सद्भावस्यैव अनिश्चितत्वात् । तथा च सति आत्मनि ज्ञानसुखादयो जायमानाः देहावच्छिन्नदेशात् अन्यत्रापि जायेरन् ।

स्यादेतत् ' सर्वं कार्यं कारणत्रयम[10]पेक्ष्य उदयमासादयति ; तत्र ज्ञानादीनां आत्मा[11] समवायिकारणम्, अदृष्टादि च निमित्तकारणम्, आत्ममनः[12]संयोगः असमवायिकारणम् ; ततश्च हृदयदेशावस्थानात् मनसो हृदयावच्छिन्नात्मदेशेनैव संयोगात् तत्रैव सुखदुःखादयो जायन्ते, न तथा संख्यापरिमाणादयः ' इति । तदेतदविचारितरमणीयं दृश्यते । तथा हि[13] । आत्मनो हृदयावच्छेदो नाम किं आत्मनः[14]

---

१. A: संसार
B: आत्मनो ... स्वभाव
E omits असंसार
२. B: उपाधितः
३. B: मणिरिव
४. All except B give इव
५. B: सुखदुःखासंभव
६. B: इत्य ... मः
७. E omits गुणश्च, omission indicated by dots.
८. E drops अपि
९. B omits इति वाच्यम्
१०. B: त्रयमप्यपेक्ष्य
११. A: आत्मनि
१२. E: आत्मजन्मनःसंयोगः
१३. B: अपि for हि
१४. B: आत्मस्वरूपं उत तत्त्वान्तरम्

स्वरूपमेव उत धर्मान्तरम्? स्वरूपं चेत्, तस्य सर्वगतत्वात् सर्वत्रैव सुखदुःखादयो जायेरन्। अथ धर्मान्तरम्, तत्रापि वक्तव्यम् 'स धर्मः किं[1] आत्मस्वरूपमात्रे अवतिष्ठते, किं वा अवच्छिन्ने[2] देशे?' इति। आद्ये कल्पे[3], तस्य सर्वात्मदेशव्यापित्वात् सुखदुःखादयोऽपि तथैव प्रसज्येरन्। द्वितीये तु तस्याप्यवच्छेदान्तरापेक्षायां[4] अनवस्था। एवं च सति कथमध्यासमन्तरेण नियत[5]प्रदेशे [6]संसारोपलंभः? अदृष्टेन नियमोपपत्तिरिति चेत्, तदप्यसत्। न च[7] अदृष्टेनापि निष्प्रदेशे[8] एवात्मनि परमार्थतः[9] प्रदेशविशेषजन्म संभवति, वस्तुस्वभावस्य अन्यथाकर्तुमशक्यत्वात्। तदेवं आत्मनि प्रदेशविशेषप्रतिभासोऽपि विभ्रमः। ततश्च तदाश्रये[10]संसारो मायाविजृंभित एव, कल्पितोपाधावेव प्रतिभासमानत्वात्। तदयं प्रयोगः 'विवादाध्यासितः[11] संसारः काल्पनिको भवितुमर्हति, कल्पितोपाधावेव प्रतिभासमानत्वात्, मृगतृष्णिकाजलसमुद्भूतवीचीतरङ्गमाला[12]वत्' इति।

यत्पुनरुक्तम् 'अबाधितप्रतीतिगोचरत्वात् सत्य एव संसारः' इति, तत्[13] दुस्तर्कपक्षकक्षीकारापराधात् वेदार्थगन्धानाघ्रातचेतस्तया समुद्भावितम्, यावता "तत्त्वमसि" (Chānd., VI, viii, 7) "अहं ब्रह्मास्मि" (Bṛh., I, iv, 10) इत्यादिशास्त्रं तात्पर्येण अद्वितीयनिरतिशयानन्दाविक्रियब्रह्मभावं आत्मनः प्रतिपादयत् सकल[14]विक्रियासम्बन्धं[15] मनुष्याद्यभिमानं च बाधते। न खलु सकल[16]प्रमाणविरोधेन उदय-

---

१. A E add वा ;
B: किमात्मनि
२. B: च्छिन्नदेशे
३. B: पक्षे
४. E: अपेक्षामनवस्था
५. E: नियतः प्रदेशे
६. B C D prefix न
७. E: वा for च
८. A: प्रदेशमेवा
E: निष्प्रदेशभावात्मनि
९. E: परमार्थः
१०. E: तदाश्रित
११. B: विवादगोचरापन्नः
१२. E: मालादिवदिति
१३. B: तद्वन्तः तर्क ;
E: तदपि दुस्तर्क
१४. E: क्रिया for विक्रिया
१५. B: सम्बन्धमनुष्या
१६. A: सकलमप्र

मासादयन् संसार[1]प्रतिभासः तत्त्वावेदकप्रमाणतया निरतिशयपुरुषार्थपर्यवसायि च शास्त्रं बाधेत ।

यदप्युक्तम् ' अपरोक्षस्वभावे आत्मनि परोक्षज्ञानस्य भ्रान्तित्वात्, अपरोक्षज्ञानस्य प्रमाणत्वेऽपि तदुत्तरकालं प्रमातृप्रमाणव्यवहारानुदयात् संसारमिथ्यात्वे प्रमाणानुपपत्तिः ' इति, तदपि न शोभां बिभर्ति । गृहीतपदपदार्थसम्बन्धस्य न्यायविदो वाक्यश्रवणसमनन्तरं अपरोक्षज्ञानमेवात्मनि समुत्पद्यते, न पुनः परोक्ष[2]ज्ञानम् । किं च अपरोक्षज्ञानमेवात्मनि जायमानं अन्तःकरणशुद्धितारतम्यात् प्रतिब[3]द्धफलं भवति । ततश्चात्मनि निर्विचिकित्सात्[4]मानुभवफलस्य प्रतिबद्ध[5]त्वेऽपि तात्पर्यवद्वाक्यप्रामाण्यादेव पूर्वमपि संसार[6]मिथ्यात्वनिश्चयः उपपद्यते । श्रवणमननादिसकलसाधनसम्पत्तौ पुनः अशेषप्रतिबन्धविगमोपपत्तेः निर्विचिकित्सात्मानुभवे सति त[7]द्विपरीतसंसारप्रतिभासोऽपि[8] निवर्तते इति विशेषः ।

यदप्युक्तम् ' इष्टानिष्टप्राप्तिपरि[9]हारयोः मिथ्यात्वे सति तत्सा[10]धनविधायि शास्त्रमनर्थकम् ' इति, तदप्यचारु विरचितम्, श्येनादिविधानवत् उपपत्तेः । न हि श्येनादेः परमार्थतः पुरुषार्थसाधनत्वमस्ति, किं तु अनर्थसाधनत्वमेव ; हिं[11]साधनत्वात्, तस्याश्च प्रतिषेधशास्त्रादेव अ[12]नर्थत्वनिश्चयात्, चादनासूत्रे च अर्थशब्देन श्येनादेः अ[13]नर्थसाधनत्वसूचनात् । तदेवं यथा भ्रान्तिपरिकल्पितपुरुषार्थं प्रत्य[14]बाधात्

---

१. E: संसारभ्रान्तिभासत्वादेव...दकप्रमाणतया

२. B: प्रतिबन्धापरोक्षज्ञानम् । किं तु अपरोक्ष etc.

३. E: बन्ध

४. B omits आत्मा

५. B: बन्धेऽपि ; E: बन्धत्वेऽपि

६. B: संसारस्य

७. B omits तत्

८. E drops अपि

९. E: हाराय

१०. A subsequently corrects this into कर्मसाधन

११. B omits हिंसा

१२. E omits त्व

१३. B: अनर्थसूचनात्

१४. B: प्रत्याबाधात्

भ्रान्तपुरुषाभिप्रायमेवानुसृत्य श्येनादिसाधनविधानं तदनुष्ठानं तत्फलावाप्तिश्च दृश्यते, तथा ऐकात्म्य[१]विज्ञानात् प्राक्[२] आत्मनि अविद्यया पुरुषार्थमध्यारोप्य तत्रै[३]व अभिनि-विशमानस्य भ्रान्तस्यैवाभिप्रायमनुसृत्य साधनविधानादि सर्वम[४]बाधात् उपपद्यते ।

ननु '[५]न श्येनादौ भ्रान्तः अधिकारी, प्रतिषेधशास्त्रादेव श्येनादेः अनर्थत्व-मवगच्छतोऽपि प्रवृत्तिदर्शनात्; अतो नायं दृष्टान्तः' इति । नैष दोषः; श्ये[६]नादि-फलाभिलाषकलुषीकृतचेत[७]सः पुरुषस्य[८] पापादिप्रतिबन्धबाहुल्ये स[९]ति प्रतिषेधशास्त्रमपि न फलपर्य[१०]न्तंविज्ञानं जनयितुमीष्टे । तथैव श्रुतवेदान्तस्यापि प्रतिबन्धबाहुल्ये सति ऐकात्म्यशास्त्रमपि न फलपर्यन्तं विज्ञानं जनयति; यज्ञादिक्षपिताखिलप्रतिबन्धस्य जनयति; इति न किञ्चिद्वैषम्यम् ।

यदपीदमुद्भावितम् 'संसारसम्बन्धात् आत्मनि पारमार्थिकविशेषाभ्युपगमेऽपि[११] संसारस्यापि तथात्व[१२]प्रसङ्गात्, अनभ्युपगमे च संसारभावाभावयोः आत्मनः एकरूप-त्वात्, न संसारनिवृत्तये शास्त्रमारब्धव्यम्' इति, तदपि बालिशभाषितम्; आत्मनि संसारसम्[१३]बन्धस्यैव विशेषत्वात्, तस्य च वस्तुतोऽभावेऽपि भ्रान्त्या प्रतिभासमान-त्वात्, सत्यत्वमिथ्यात्वयोरपि संसारस्या[१४]त्मनि प्रतिभासमा[१५]नतयैवानर्थत्वात् तन्निवृत्तये शास्त्रारंभोपपत्तेः ।

यदपीदमवादि 'रज्ज्वादौ सर्पा[१६]ध्यासे विषकरणादिषु दोषसंभवात् उभयो-रपि विषयत्वाच्च भवेदपि[१७] तत्र भ्रान्तिः; आत्मन्यनात्माध्यासे पुनः द्रष्टुः अधिष्ठा-

---

१. A: ऐकात्म
२. E: प्रधानात्मनि
३. A E: तत्र च
४. A: सर्वमुपपद्यते
५. E omits न
६. B: श्येनादिष्वफला
७. E omits चेतसः
८. B: पुरु .... पापादि.
९. C omits सति
१०. B: पर्यन्तं विज्ञानं
११. B: च for अपि
१२. B omits त्व
१३. A omits सं
१४. E: संसार आत्मनि
१५. E omits मान
१६. E: सर्पाध्यासे
१७. B adds दृष्टत्वाच्च omitting तत्र

नस्य कारणस्य वा आत्मव्यतिरेकेणाभावात्, आत्मनश्च निर्विशेषत्वात् न तत्र भ्रान्तिसंभवः' इति, अत्र[1] वदामः। द्रष्टरि दृश्यावभासस्य अध्यासात्मकत्वे सकलवेदान्तप्रामाण्यादेव निश्चिते सति[2] आत्मनि बाह्याध्यासनिमित्तकारणा[3]भावेऽपि सर्वभ्रमानुगतानिर्वच[4]नीयाज्ञानमेव कार्यान्यथानुपपत्त्या कारणं परिकल्प्यते इति न कां[5]चिदनुपपत्तिः।

या पुनरेषा कल्पना 'आत्मनि स्व[6]तः संसाराभावेऽपि उपाधिनिबन्धनः अस्त्येव' इति, सापि वृथैव कल्पना; औपाधिकरूपस्य अनिर्वचनीयाविद्याध्यासव्यतिरेकेणानिरूपणात्। तस्मा[7]त् आध्यासिक एवात्म[8]नि संसारः इति स्थितम्।

इति तत्त्वशुद्धौ संसारमिथ्यात्वप्रतिपादनप्रकरणम्।



---

१. E: तत्र
२. E: तस्यातानि
३. A: कारणभाव
४. B: अनिर्वचनीयमेव
५. B: कदाचित्
६. B drops स्वतः
७. E omits तस्मात्
८. E drops आत्मनि

## ॥ स्वयंप्रकाशत्वप्रतिपादनं त्रयस्त्रिंशम् ॥

मायादिव्यसरःसमुत्थमखिलं[1] ब्रह्मादिपुं षट्पदं[2]
पुण्यापुण्यसमुत्थ[3]गन्धनिलयं निस्सीममाशादलम् ।
सुव्यक्तं भुवनत्रयाब्जममलं[4]ज्ञानांशुभिः भासयन्
भूयाद्वो हरिभास्करो निरवधिज्ञानाय सौख्याय च ॥

इदमिदानीं विचार्यते 'किमात्मा प्रमाणग्राह्यः किं वा स्वयंप्रकाशः?' इति । इह खलु भाट्ट[5]मतानुसारिणो वर्णयन्ति—न स्वयंप्रकाश आत्मा, अहंप्रत्ययग्राह्यत्वात् । ननु 'अहमिदं जानामि' इत्यात्मा ग्राहकोऽव[6]भासते ; कुतस्तस्य ग्राह्यत्वम्? इति । नैष दोषः; ग्राहकस्यैव सतः 'घ[7]टं जानन्तं मां जानामि' इति ग्राह्यत्वस्याप्यवभासमानत्वात् । न च वाच्यम् 'एक[8]स्य कर्मकर्तृत्वविरोधात् भ्रान्तिरेवेयं प्रतीतिः, स्वप्नादिगतस्वशिरश्छेदादिप्रतीतिवत्' इति ; तद्वदत्र बाधानुपलंभात् । ननु विद्यत एव अत्रापि यौक्तिक[9]बाधः । तथा हि । कर्मत्वं नाम तावत् परसमवेतक्रियाफलभागित्वम् ; कर्तृत्वं पुनः क्रियाश्रयत्वम् । ततश्च आत्मनः अहंप्रत्ययकर्मत्वे सति तदनाश्रयत्वमे[10], तयैव तत्फलशालित्वम्, तदैव[11] तत्कर्तृत्वे सति तदाश्रयत्वं च इति युगपदात्मनि अहंप्र[12]त्ययभावाभावोपनिपातप्रसङ्गः ; स च प्र[13]माणविरुद्धः इति । एतच्च वै[14]तम्,

---

१. B: अखिलब्रह्मा
२. E: पुंवत्पदं
३. A E: समृद्ध
४. E: ममलं
५. E: भार्गतानु
६. B: ग्राहकोऽवभासकोऽवभासते
७. B: घटं जानामीति ग्रा ... प्यवभासमानत्वात्
८. A: एकत्वस्य
९. B: यौगिको बाधः
E: यौक्तिकबोधः
१०. B E: तदनाश्रयतयैव तत्फल
११. E: तच्चैवैतत् कर्तृत्वे सति
१२. B: प्रत्ययभावोपनिपात
१३. A: सर्वप्रमाण
१४. E: वा किं युक्ति

युक्तिमात्रस्य प्रत्यक्षावभासबाधकानुपपत्तेः[१]। तथा[२] हि। युक्तिर्नाम तर्कः। स च प्रमाणानुग्राहको न प्रमाणम्। अतः कर्मस्वभावत्वे आत्मनो यदि किञ्चित् प्रमाणं भवेत्, तदा[२] तदनुग्राहकतया तर्कोऽपि तत्र निविशेत[३]। न च[४] तदस्ति, प्रमाणत्वे कर्मत्वस्य दुर्वारत्वात्। न ह्यकर्मकमेव विज्ञानं आत्मनि प्रमाणमिति संभवति, जानतेः सकर्मकत्वात्। नाप्यन्यकर्मकम्[५], अतिप्रसङ्गात्। अत्र प्राभाकरा मन्यन्ते 'संवेदनं घटादिकर्मकं[६] आत्माश्रयं आत्मनि घटादौ स्वरूपे च प्रमाणम्; अतो नातिप्रसङ्गः' इति। नैतत्सारम्, आत्मनि ज्ञान[७]निमित्तातिशयाभ्युपगमे सति कर्मत्वप्रसङ्गात्; अनभ्युपगमे च अकिञ्चित्करस्य[८] ज्ञानस्य तत्र प्रामाण्यानुपपत्तेः अतिप्रसङ्गाच्च। स्यादेतत् 'गन्तृगन्तव्ययोः उभयोरपि[९] प्राप्तिलक्षणातिशयत्वेऽपि गन्तव्यस्यैव[१०] ग्रामादेः परसमवेतक्रियाफलशालिनो गमिक्रियाकर्मत्वं दृष्टम्, न तु गन्तुर्देवदत्तादेः; एवमिहापि ज्ञातृज्ञेययोः ज्ञाननिमित्ता[११]तिशयवत्त्वेऽपि ज्ञेयस्यैव कर्मत्वं युक्तम्, न ज्ञातुः, इति। तदिदं न पेशलम्, पदार्थानां स्वभाववैचित्र्योपपत्तेः। न[१२] हि यथा गमिक्रिया सकर्मिका दृष्टा इति क्रिया[१३]त्वसामान्यात् स्थितिक्रियापि[१४] सकर्मिकेति कल्पयितुं[१५] शक्यते[१६], तयोः स्वभावभेदस्यानुभूयमानत्वात्, तथा गमनपचनादिबाह्यक्रिया स्वाश्रयव्यतिरिक्तकर्मिका इत्येतावता न विदिक्रियापि तादृशीति[१७] कल्पयितुं शक्या[१८]; तदा[१९] अस्याः स्वाश्रयकर्मिकाया अपि 'घटं जानन्तं मां जानामि' इति

---

१. A: बाधकत्वानुपपत्तेः
२. A: तथा
३. E: निविशते
४. E omits च
५. B: कर्मत्वम्
६. A: कर्मकात्माश्रयं
   E: कर्मात्माश्रयम्
७. B: तन्निमित्त
८. E: कारणस्याज्ञानस्य
९. B omits उभयोः
१०. B omits एव
११. A: निमित्तानिमित्तानवधिकातिशय
१२. B: ननु
१३. A E: क्रियार्थे
१४. B E omit अपि
१५. E adds यापि तादृशी before कल्पयितुं
१६. B: शक्यम्
१७. A omits इति
१८. E: शक्यते
१९. B: तस्याः,
   E: सता स्वाश्रय

अनुभूयमानत्वात्। अतो न संविदाश्रयतयैव आत्मा प्रत्यक्षः, किं तु ज्ञानक्रियो[1]-कर्मतयैव। न चात्र एकस्य कर्मकर्तृत्वविरोधः, उभयात्मना अनुभवात्, इत्युक्तम्। अपि च नैवात्र कर्मकर्तृत्वविरोधः शङ्कनीयः[2], सामान्यविशेषरूप[3]भेदेन व्यवस्थोपपत्तेः। तथा हि। सर्वं वस्तु सामान्य[4]विशेषात्मकम्। तत्रात्मा[5] द्रव्यादिसामान्यरूपेण अहं-प्रत्ययकर्म भवति; चेतनाख्यविशेषरूपेण आश्रयः[6]। ते[7] च रूपे नात्मनोऽत्यन्तभिन्ने नाप्यभिन्ने एव इत्यात्मनो व्यवस्थया उभयरूपसिद्धिः।

नैयायिकादयस्तु नियमेन परोक्षत्वात् नित्यानुमेय आत्मा इति कल्पयन्तो ज्ञानसुखादीनां गुणत्वं परिकल्प्य तेषां च मनसैवैकेन्द्रियेण ग्राह्यत्वात् गन्धादिवत् विशेषगुणत्वं कल्पयित्वा अनुमिमते। तथा हि—विवादगोचरापन्नाः ज्ञानसुखादयो महाभूत[8]दिक्कालमनोव्यतिरिक्तस्य कस्यचित् विशेषगुणाः; तेषु नियमेनादृष्टत्वे सति विशेषगुणत्वात्; यो यत्र नियमेनादृष्टत्वे सति विशेषगुणः असौ तद्व्यतिरिक्तस्य कस्य-चित् विशेषगुणो दृष्टः, यथा अन्यत्रादृष्टो गन्धगुणः पृथिव्या एव विशेषगुणः; तथा चेमे[9] ज्ञानादयः; तस्मात् तथा; यत्तत् ज्ञानादिगुण[10]वत् द्रव्यं स आत्मा—इति।

अथ[11] सांख्यादयस्तु कल्पयन्ति[12]—सुखदुःखमोह[13]धर्मवत्तया त्रिगुणात्मकत्वात् अन्तःकरणं तावदचेतनम्। अचेतने तस्मिन् अहंवृत्तिविशिष्टे चिदाकारावभासो दृश्यते 'घटमहं जानामि' इति। तत्रेदमनुमीयते 'अचिदात्मन्यन्तःकरणे[14] चिदाकाराव-भासो धर्मी तथाविध[15]बिम्बसन्निधानपुरस्सरो भवितुमर्हति, अतस्मिंस्तदवभासत्वात्,

---

१. B C omit क्रिया
२. E: आशङ्कनीयः
३. B: रूपेण
४. A: सामान्यं विशेषात्मकम्
५. E omits तत्र
६. A: अतिशयः, a subsequent correction.
७. A: तेन for ते च
८. B: भूत .... लमनो
९. E: चोक्तज्ञानादयः
१०. A E: गुणद्रव्यं
११. B omits अथ
१२. B: मन्यन्ते
१३. B: धर्ममोहवत्तया
१४. B omits करणे
१५. A E omit विध

स्फटिकादिगतलौहित्यादिवत्। स बिम्बमूतः[१] आत्मा' इति। तदप्यसत्, 'इदमहं जानामि' इत्यात्मनः प्रत्यक्षा[२]वभासनात् अनुमाना[३]पेक्षाभावात्। न खलु हस्तिनि दृष्टे हस्तिपदानुमानमर्थवत्। अपि च आत्मा यदि विषयानुभवसमये नावभासेत, स्वपर-संवेद्ययोः अनतिशयप्रसङ्गः, ततश्च सर्वव्यवहारलोपः। ननु 'यदि घटादिज्ञानसमये [४]चात्मविषयमपरं ज्ञानं कल्प्येत, तदात्मनि युगपत् ज्ञानद्वयसमवायः स्यात्। स चायुक्तः, अवान्तरजातीयस्य स[५]जातीयगुणद्रव्यस्य युगपदेकस्मिन् द्रव्ये समवायाभावात्। न हि पटे शौक्ल्यद्वयं युगपत्समवैति। अपि च ज्ञानमात्ममनसोः[६] संयोगजन्यम्; आत्ममनसोश्च निरवयवत्वात् एकदा[७] एक एव संयोगः; अतश्च[८] ज्ञाना[९]यौगपद्यम्। अपि च ज्ञानयौगपद्ये मनःकल्पनापि व्यर्था स्यात्। ज्ञानायौगपद्यं हि म[१०]नसः कल्पकम्। तदुक्तम् "युगपत् ज्ञानानुत्पत्तिः मनसो लिङ्गम्" (Cf. Nyāyasūtra, III, ii, 56)' इति। नैष दोषः; युगपत् एकस्मिंश्चित्रावयविनि नीलपीताद्यनेकरूपगुणसमवायदर्श-नात्। अथ तत्र नीलपीताद्यवान्तरजा[११]तीयभेदो विद्यते इति चेत्, इहापि तर्हि घटात्मविषयज्ञानयोश्च अवान्तरजा[१२]तीयभेदो विद्यत एव। स्यादेतत् 'चित्रस्य सावय-वत्वात् स्वा[१३]वयवद्वारेण अवान्तरजा[१४]तीयानेकगुणास्पदत्वमुपपद्यते, न त्वात्मनः, निरवय-वत्वात्' इति। तदप्यसत्; प्रतिज्ञानं अदृष्टादिभेदात् भिन्नादृष्टादिविशिष्टानेकरूपैः आत्मनोऽप्येक[१५]ज्ञानाश्रयत्वोपपत्तेः। निरवयवसर्वगतयोरप्यात्ममनसोः औपाधिकदेश-भेदात् क्रमेण युगपत् वा आकाशस्येव अनेकसंयोगोपपत्तेः अनेकज्ञा[१६]नवत्त्वोपपत्तिः।

१. E omits भूत
२. E: अनवभास
३. E: अनुमानाभावात्
४. B omits च and reads विषयपरं
५. B omits सजातीय
६. B: मनस्संयोग ;
E: आत्मनः omitting मनस्
७. A E: एकदेव संयोगः
८. A E drop च
९. B: ज्ञानयौगपद्यम् ;
E: ज्ञानं यौगपद्यम्
१०. B: मनःकल्पनम्
११. A E: जातिभेदो
१२. B: जातिभेदो
१३. B: सावयव
१४. B: एकजातीय
१५. A: आत्मनो ज्ञानाश्रय
१६. B: ज्ञानोपपत्तिः

न च विषयात्मज्ञानद्वययौगपद्येऽपि मनसो वैय्यर्थ्यप्रसङ्गः, विषयज्ञानयौगपद्यार्थत्वात् मनःकल्पनायाः। तस्मात् आत्मा विषयानुभवसमये ज्ञानान्तरवेद्यत्वेनैव[1] प्रत्यक्षः, न नित्यानुमेयः, नापि संविदाश्रयतयैव सिद्धः; सर्वथापि तावत् न स्वयंप्रकाशः, प्रमाणाभावात्—इति।

अत्राभिधीयते। न[2] संविदधीनप्रकाश आत्मा, प्रत्यक्षानुमानागमार्थापत्तिभिः स्वयंप्रकाशत्वावगमात्। प्रत्यक्षं तावदुपपद्यते। सुप्तोत्थितस्य 'एतावन्तं कालं न [3]किञ्चिदवेदिषम्' इति स्वापकालीनाज्ञानपरामर्शो दृश्यते। स च परामर्शः अनुभवमन्तरेण अनुपपद्यमानः सुषुप्तिकालीनमज्ञानानुभवं गमयति। न खलु सुषुप्तिकाले प्रत्यक्षा[4]द्यनुभवः संभवति, इन्द्रिय[5]व्यापारोपरमात्। उपरतेषु किलेन्द्रिय[6]व्यापारेषु लोके सुषुप्तिः प्रसिद्धा। श्रुतिश्च भवति "तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशः तस्मिन् शेते" (Bṛh., II, i, 17) इति। नाप्यभावानुभवः तदा संभवति, सकलकरणो[7]परमे सति[8] धर्म्या[9]दिज्ञानासंभवात्, तेन विना अभावानुभवानुपपत्तेः। ननु यथा चत्वरादौ गजाद्यभावः प्रातःकालीन एव मध्याह्नेऽनुभूयते 'प्रातश्चत्वरे गजो नासीत्' इति, एवमिहापि सुषुप्तिकालीन एव ज्ञानाभावः प्रतियोगिस्मरणा[10]दिपूर्वकं उत्थितेनानुभूयते 'न किञ्चिदवेदिषम्' इति। नैतत्सारम्। प्रातःकाले चत्वरादि-[11]धर्मिविशेषानुभवात् प्रतियोगिस्मरणमात्र[12]वैकल्यात् उत्तरकालं प्रतियोगिस्मरणे सति अनुभूतधर्मिपरामर्शेन तत्र गजाद्यभावज्ञा[13]नं संभवति; इह तु सुषुप्तिकाले धर्मिज्ञाना-

---

१. B: ज्ञानान्तर ... कत्वेनैव
२. E omits न
३. A: किञ्चिदहमवेदिषम्, अहं being a subsequent addition.
४. B omits आदि; E: प्रत्यक्षाद्यनुभवति
५. B: इन्द्रियादि
६. B: इन्द्रियादि
७. B: कारण
८. B: सति .... ज्ञाना
९. E: धर्मादि
१०. E omits आदि
११. A E: धर्म
१२. E: स्मरणवैकल्यं, उत्तर
१३. E: गजाद्यभावः संभवति

संभवात् नोत्तरकाले[2]मपि सौषुप्तिकाभावज्ञानसिद्धिः। सुषुप्तेऽप्यात्मज्ञान[3]मात्रमस्ति; अतो[4]ऽत्रापि धर्मिज्ञानसिद्धिः; इति चेत्, तर्हि भवतैव आत्मनः स्वयंप्रकाशत्वमिष्टं स्यात्, प्रकाशा[5]व्यभिचारितयैव आत्मस्वरूपाङ्गीकरणात्। न ह्यात्मनि प्रकाशव्यभिचारमन्तरेण अन्यनिमित्तप्रकाशत्वं आत्मनोऽवगन्तुं शक्नुमः। येषां पुनः विषयसंविदाश्रयत्वे[6]नैव आत्मनः[7] सिद्धिः, तेषां सुषुप्ते विषयानुभवाभावात् दूरनिरस्त एवात्मप्रतिभासः। अतो धर्मिज्ञानाभावात् न प्रातर्गजाभाववत् उत्तरकालमभावानुभवसिद्धिः। स्यात् तर्हि अनुमानादभावानुभवः; तथा हि 'सुषुप्तिकाले न किञ्चित् मया अनुभूतम्, अस्मर्यमाणत्वात्, सप्तमरसवत्' इति। तदसत्; अनुभूते वस्तुनि स्मरणनियमाभावात्। अथ 'नियमेनास्मर्यमाणत्वात्' इति हेतुं विशिंष्याः[8], तदापि[9] निर्विकल्पकज्ञाने[10]नानुभूते वस्तुनि व्यभिचारः। अपि च सुषुप्तिकाले कदाचित्क[11]विज्ञानोपरमे सति यदि स्वरूपानुभवोऽपि नाभ्युपगम्येत, सुषुप्तिरेव न सिध्येत्। ततश्च सुषुप्तिकाले 'न किञ्चिदवेदिषम्' इति पक्षोऽपि न सिध्येत्। अतः [12]न अनुमानादपि अयमुत्थितस्याभावावगमः। नार्थापत्त्यापि, सुषुप्तिकाले सकलज्ञानाभावेन[13] विनानुपपद्यमानकार्याभावात्। सुषुप्तिरेव अनुपपन्ना इति चेत्, सा किं अवगता कल्पयति, आहोस्वित् अनवगतैव? न तावदनवगता, अतिप्रसङ्गात्। नाप्यवगता[14], स्वरूपानुभवव्यतिरेकेण तदवगमोपायाभावात्। नाप्युपमानेन उत्थितस्य स्वापसिद्धिः, अस्य[15] सादृश्यविषयत्वात्। परिशेषात् सुप्तो[16]त्थितस्य 'न किञ्चिदवेदिषम्' इत्ययं परामर्शः स्वरूपानु-

---

१. .... ... ...
२. A E: कालेऽपि
३. A E: आत्ममात्रविज्ञानमस्ति
४. A E omit अतः
५. A E: व्यभिचारि
६. B: आश्रयतयैव
७. E: आत्मसिद्धिः
८. A: विशिष्यात्
९. E: तदपि
१०. B: विज्ञान
११. E: कदाचिद्विज्ञानोपरमे
१२. One न is wanting after अतः in all mss.
१३. A E: ज्ञानभावेन
१४. B: अनवगता
१५. B: असादृश्यविषयत्वात्
१६. E: सुषुप्तो

भवमेव कल्पयति। स च स्वरूपानुभवः अपरोक्षत्वात् प्रत्यक्षमित्युच्यते।[1] अपरोक्षं प्रत्यक्षमिति हि प्रत्यक्षलक्षणम्। 'अर्थेन्द्रियसंप्रयोगात् संप्रयुक्तेऽर्थे विज्ञानम्' इति तु बाह्यविषयप्रत्यक्षविशेषलक्षणम्। [[2]द्विविधं हि प्रत्यक्षम्], बाह्यमाभ्यन्तरं च। बाह्यं इन्द्रियजन्यम्, रूपादिविषयम्। आभ्यन्तरं च ज्ञानाज्ञानादिसाधकम्, अज्ञानोपाधिकम्, आत्मस्वरूपमेव। एवं[[3]विधात्मस्वरूपानभ्युपगमे सुषुप्त्यादिः न सिध्यति इत्युक्तम्। तस्मात् स्वरूपानुभवप्रत्यक्षेण आत्मनः स्वयंप्रकाशत्वं अध्यवसातव्यम्।

अनुमानमपि 'विवादगोचरापन्न आत्मा स्वयंप्रकाशो भवितुमर्हति; प्रकाशाव्यभिचारित्वात्; यद्यत् ] प्रकाशाव्यभिचारि तत्तत् स्वयंप्रकाशं दृष्टम्, यथा प्रदीपादि; तथा चायमात्मा; तस्मात् तथा' इति। न चायमसिद्धो हेतुः, आत्मनः सुषुप्तेऽपि प्रकाशाव्यभिचारित्वस्य[4] साधितत्वात्। ननु 'प्रदीपादेः संवेद्यत्वेन अस्वयंप्रकाशत्वात् साध्यविकलो दृष्टान्तः; तथा[5] विद्यमानस्यापि कदाचिदनुपलंभात् साधनविकलश्च' इति। अत्रोच्यते। प्रकाशो नाम तमोविरोधी[6] भावः। तमश्च[7] द्विविधम्, बाह्यमाभ्यन्तरं च। बाह्यं शार्वरादिकम्। आन्तरं पुनरज्ञानलक्षणम्। प्रकाशश्च द्विविधः। एको बाह्यः तमोविरोधी प्रदीपाद्यालोकलक्षणः। अज्ञानविरोधी चैतन्यलक्षणोऽन्यः। तत्र संवेद्यत्वे प्रदीपादेः आलोकप्रकाशस्य अन्यनिमित्तत्वात् अस्त्येव स्वयंप्रकाशत्वम्। अत एव प्रकाशाव्यभिचारित्वं च इति[8] न साध्यविकलः। नापि[9] साधनविकलो दृष्टान्तः।

ननु[10] 'प्रकरणसमो हेतुः। आत्मा धर्मी[11] संवेद्यो भवितुमर्हति, प्रकाशाव्यभिचारित्वात् [[12]प्रदीपवत' इति। न, अप्रयोजकत्वात्। न खलु प्रकाशाव्यभि-

---

१. B: प्रत्यक्षम ... च्यते
२. E omits the part within brackets.
३. E omits the part bracketed.
४. A E add अनन्तरमेव after त्वस्य
५. B: तथापि
६. B: विरोधि
७. B: तच्च for तमश्च
८. E omits इति
९. B omits अपि
१०. E: न प्रकरण
११. B omits this word.
१२. B omits the part bracketed.

चारित्वात्] प्रदीपादेः संवेद्यत्वम्, किं तु अनात्मत्वात्, इति। ननु इतरत्रापि तुल्यं अप्रयोजकत्वम् 'प्रदीपादेः न प्रकाशाव्यभिचारित्वात् स्वयंप्रकाशत्वम्; किं तर्हि? तेजोद्रव्यत्वात्' इति। तदसत्, पार्थिवस्यापि पद्मरागादिमणेः स्वत एव तमोविरोधित्वदर्शनात् इति। ननु संप्रतिसाधनोऽयम् 'विवादास्पदीभूत आत्मा धीकर्मतयैव सेद्धुमर्हति, वस्तुत्वात्, घटादिवत्' इति। तदपि न घटामञ्चति; 'वस्तुत्वात्' इति सामान्यव्याप्तेः सावकाशत्वात, 'प्रकाशाव्यभिचारित्वात्' इत्यस्य विशेषविषयत्वेन निरवकाशत्वात्, सावकाशनिरवकाशयोश्च निरवकाशस्यैव बलीयस्त्वात्। अपि च घटादेः धीकर्मत्वं न वस्तुत्वप्रयुक्तम्, किं तु अचिद्रूपत्वादेव। अचिद्रूपत्वं च [अनात्मकृतम्। अतश्च अप्रयोजको हेतुः। न च वाच्यम् 'प्रकाशाव्यभिचारित्वमेव स्वयंप्रकाशत्वम्; अतः साध्यसमो हेतुः' इति; तयोः वैलक्षण्यस्य सिद्धत्वात्। तथा हि। स्वयंप्रकाशत्वं नाम] प्रकाशस्वरूपमेव। प्रकाशाव्यभिचारित्वं तु प्रकाशस्वरूपत्वेन प्रकाशान्तराविनाभावेन वा भवति इति स्वरूपबाह्यम्। ननु 'प्रदीपादेः प्रकाशगुणाश्रयत्वेन प्रकाशाव्यभिचारित्वम्; आत्मनोऽपि प्रकाशाव्यभिचारित्वे सति तथात्वप्रसङ्गः; स च भवतामनिष्टः' इति। एतच्च वार्तम्, प्रदीपादिप्रकाशस्यापि गुणत्वासिद्धेः। न तावत् प्रकाशो नाम रूपविशेषः, वज्रमरतकवैडूर्यादिषु शुक्लनीलादिरूपभेदेऽपि [प्रकाशानुवृत्तिदर्शनात्। नापि] रूपत्वसामान्यम्, घटादिगतरूपेषु अदर्शनात्। नापि संयोगविभागादिवत् साधारणो गुणः, चक्षुर्व्यतिरिक्तसाधनान्तरेण अनुपलंभात्। तस्मात् प्रदीपादिद्रव्यमेव प्रकाशः।

---

१. B: नात्मत्वात्
२. A: न हि
३. A: सत्प्रति;
E: संप्रतिपन्नसाधनोऽयं
४. A E omit एव
५. E omits धी
६. E: वस्तुतः प्रयुक्तं
७. A E drop the portion within brackets.
८. A: एतच्चापार्थम्
९. B omits the bracketed part.
१०. A E: सामान्यात्

ननु ' "प्रकाशाव्यभिचारित्वात्" इत्ययं हेतुः अज्ञाने अनैकान्तिकः। अवस्थात्रयेऽपि अज्ञानं आत्ममात्रचैतन्यसाक्षिकं इति हि[1] भवतां राद्धान्तः। न च स्वयंप्रकाशत्वेन इष्टमज्ञानम् ' इति। तदपि न[2] मनोहरम्, प्रमाणज्ञानेन[3] अज्ञाननिवृत्तेः इष्टत्वात्। अज्ञानस्य प्रकाशाव्यभिचाराभावेऽपि प्रकाशस्य अज्ञानव्यभिचारः अस्त्येव। न तथा आत्मानं प्रकाशो व्यभिचरति, आत्मा वा[4] प्रकाशम्। तस्मात् निरवद्य एवायं हेतुः।

अपि च येषां[5] असंवेद्य एवायमात्मा, तान् प्रति इदं[6] प्रयुञ्ज्महे ' आत्मा धर्मी स्वयंप्रकाशो भवितुमर्हति, असंवेद्यत्वात्, संवेदनवत् ' इति। येषां पुनः ज्ञानं क्रिया, तान् प्रति इदम् ' विवादगोचारापन्नं ज्ञानं आत्मानं न धर्मीकरोति[7] इति साध्यो धर्मः, क्रियात्वात्, गमनादिवत् ' इति। किं च अयं सर्वसाधारणो हेतुः अभिधीयते ' आत्मा स्वयंप्रकाशः, स्वयमपरोक्षतयैव अर्थान्तरे प्रत्यक्षव्यवहारहेतुत्वात्, प्रदीपादिवत् ' इति। न च वाच्यम् 'अप्रत्यक्ष[8] एवायमात्मा घटादिव्यवहारहेतुः ' इति। स्वपरसंवेद्ययोः[9] अनतिशयप्रसङ्गात्। अतः अनुमानेनापि स्वयंप्रकाशत्वमात्मनः।

श्रुतिश्च इममर्थं दर्शयति—"आपोऽस्य ज्योतिः आत्मनो वायं ज्योतिरास्ते", "अत्रायं पुरुषः स्वयं ज्योतिर्भवति" (Bṛh., IV, iii, 9) "अयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" (Bṛh., IV, v, 13) इत्याद्या। ननु 'न सिद्धे वस्तुनि शब्दः प्रमाणम्, कार्यसंसृष्टार्थे[10] सम्बन्धग्रहणात्'

---

१. B omits हि
२. E: मनोरथकलं
३. A E: ज्ञानेनानिवृत्तेः
४. B omits वा and reads प्रकाशः
५. A: एषां
६. E omits इदं
७. E: कर्म करोति
८. B: प्रत्यक्ष
९. E: स्वयं संवेद्ययोः
१०. A E: र्थसम्बन्ध

इति। एतच्च अभिनिवेशमात्रम् । यद्यपि कार्यसंसृष्ट एव शब्दस्य सङ्गतिग्रहः[१], तथापि न कार्यत्वं शब्दार्थत्वोपयोगि, सम्बन्धग्रहणोपायत्वेनैव तदन्वयव्यतिरेकयोः अन्यथासिद्धत्वात् । यथा प्रमाणान्तरगृहीत[२]वस्तुसम्बन्धग्रहणनियमेऽपि तस्य उपायत्वेन[३] अन्यथासिद्धत्वात् अशब्दार्थत्वं तथा कार्यान्वयस्यापि ।

स्यादेतत् ‘ न प्रमाणान्तरस्य व्युत्पत्तिकालेऽपि शब्दार्थत्वप्रतीतिरस्ति । कार्यस्य पुनः प्रथमत एव शब्दार्थत्वावगमात् तस्य[४] व्यभिचाराभावात् शब्दार्थतैव ’ इति[५] । तदपि न शोभां बिभर्ति, लोके लिङ्[६]आदिशब्दानां क्रियाकार्यविषयत्व[७]निश्चयेऽपि वेदे तदुत्सृज्य भवता कार्यमात्रपरत्वाभ्युपगमात् । अथ तत्र देहान्तरोपभोग्यस्वर्गादिपद[८]समभिव्याहारात् क्षणप्रध्वंसि, क्रियामात्रपरत्वे लिङादिपदानां तदसंभवात् कार्यमात्रस्य शब्दार्थता इत्यभिप्रायः; तर्हि इहापि “ तत्त्वमसि ” (Chānd., VI, viii, 7) “अहं ब्रह्मास्मि” (Bṛh., I, iv, 10) “ अयमात्मा ब्रह्म ” (Bṛh., II, v, 19) “ विज्ञानघन एव ” (Bṛh., II, iv, 12) इत्यादिशब्दानां क्रियाशून्यसंसर्गपरतयैव अवसानात्[९] अकार्यरूपस्यैव आत्मनः[१०] शब्दार्थता इति समानश्चर्चः ।

तथा अर्थापत्तिरपि स्वयंप्रकाशत्वं आत्मनोऽवगमयति । किमत्र अनुपपन्नम् ? आत्मप्रतिभास एवेति वदामः । ननु[११] विषयसंविदाश्रयत्वेनैव[१२] संविदन्तरकर्मत्वेन वा आत्मप्रतिभासोपपत्तेः अन्यथा उपक्षीणा अर्थापत्तिः। तदपि न घटा[१३]मुपैति । न तावदनित्या स्वयंप्रकाशा संवित्, तदाश्रयतया आत्मप्रतिभासः, इति घटते ; स्वयंप्रकाशस्य

---

१. A E: ग्रहणं

२. B: गृहीत एव सम्बन्ध ;
E: गृहीतसम्बन्धग्रहण

३. B: त्वेनैवान्यथा

४. B: तस्य च

५. B omits इति

६. E: विज्ञादि for लिङ्गादि

७. E omits विषय

८. B: पदसंव्यवहाराच्चक्षणप्रध्वंसि

९. A: पर्यवसानात्

१०. A: आत्मशब्दार्थता

११. E omits ननु

१२. B omits एव (probably the reading is त्वेन वा)

१३. A: घटामटति ;
E: घटामावेति

जन्मविनाशानुपपत्तेः। तज्जन्मविनाशानुपपत्तिश्च तत्प्रागभावप्रध्वंसयोः प्रमाणाभावात्। न हि स्वयमेव प्रागभावादौ प्रमाणम्; स्वयं[1] विद्यमानस्य तदा प्रागभावाद्यसंभवात्, अविद्यमानस्य च असाधकत्वात्। अथ स्वे[2]क्षणे वर्तमानमेव अतीतादिकालै[3]र्व्यापि स्वप्रागभावादि साधयति इति चेत्, न, स्वविषयसाधक[4]त्वेन उपक्षीणत्वात्। न हि संवित् स्वाश्रयस्वविषयातिरिक्तं अवभासयति इति भवता अभ्युपगम्यते। अथापि स्यात् 'संविदाश्रय[5] एव तत्प्रागभावादिः, अभावान्तरानभ्युपगमात्' इति। तदसत्; दृश्ये प्रतियोगिनि केवलधर्मिस्वरूपस्य त्वया[6] अभावाभ्युपगमात्, संविदाश्रयरूपस्य केवलत्वाभावात्। [स्व[7]प्रागभावादिः[8] स्वविषय एव इति चेत्, तर्हि सर्वसंविदां] स्वप्रागभावादिसाधकत्वेन उपक्षयात् घटादिविषयानवभासप्रसङ्गः। अथ संवित्प्राग-भावादि संविदन्तरेण सिध्यति इति चेत्, मैवं मंस्थाः, प्रागभावाद्यसिद्धौ संविद्भेदा-सिद्धेः युगपत् संविद्द्वयासंभवात्, संविद्भेदसिद्धौ तत्प्रागभावादिसिद्धिः तत्प्रागभावा-दिसिद्धौ च संविद्भेदसिद्धिः इति इतरेतराश्रयत्वे[9]प्रसङ्गात्। अथापि स्यात् 'घटसं-वित्, पटसंवित्, इति संविदाकारभेदप्रतीतेः संविद्भेदः सिद्धः' इति। तदपि नाति-चै[10]तुरश्रम्, विषयगतत्वात् आकारभेदस्य, संविदश्च अनाकारत्वात्। तदुक्तमाचार्येण शबरस्वामिना "अनाकारामेव बुद्धिं अनुमिमीमहे" (PMB., I, i, 5) इति। न हि अवभास्याकारभेदात् अवभासकचक्षुरादिभेदं उपलभामहे। किं च आत्मनः संविदधीनप्रकाशत्वे घटा[11]दिवत् कर्मत्वं दुर्वारमेव। तस्मात् नित्यसर्वगतस्वयंप्रकाशस्यैव

---

१. E omits स्वयं ;
A: अविद्यमान
२. E: स्वरूपक्षणे
३. A: कालादि
४. B: साधनत्वेन
५. B: श्रयस्तत्प्रागभावादिः
६. A E: त्वया अभ्युपगमात्
७. E drops the portion bracketed.
८. A B omit the visarga.
९. A E: त्वात्
१०. E: नातीव चतुरश्रम्
११. A: घटादिगतम् ;
E: घटादिकं

आत्मनः अन्तःकरणवृत्ति[1]संपर्कात् अनेकत्वविषयसंवेदनत्वादिविभ्रमः न आत्मविदाम्। अतो न विषयसंविदाश्रयत्वेन आत्मप्रतिभासोपपत्तिः।

अथ 'संवित्कर्मत्वेन तत्सिद्धिः' इति प्रतिज्ञायेत, तदापि वक्तव्यम् 'किं विषयप्रका[2]शकाले एव आत्मसिद्धिः अन्यदा वा?' इति। यदि विषयानुभवकाले एव, तदा ज्ञानद्वययौगपद्यं अन्याय्यमापद्येत; [3]अवान्तरजातीयस्य गुणद्वयस्य युगपत् एकदेशसमवायासंभवात्। न च वाच्यम् 'अदृष्टेनैव आत्मनि देशभेदकल्पनात् युगपत् अवान्तरजातीयानेकगुणसमवायित्व[4]म्' इति; अदृष्टस्य अद्रव्यत्वात्, द्रव्यस्यैव द्रव्यान्तरे[5] देशभेदपरिच्छेदकत्वदर्शनात्। अथ 'आत्म[6]नोऽपि न विषयप्रतिभासकाले एव सिद्धिः, किं तु क्षणान्तरे' इति मतम्। तदसत्, आत्मनो विषयानुभवसमये अत्यन्ताप्रतीतौ 'मयेदं विदितम्' इति कर्तृत्वानवभासप्रसङ्गात्। उत्तरकालं अनुमानेन अवगम्यते इति चेत्, नैतत्सारम्; विषयप्रतीतिसमये स्वात्मनः अत्यन्तमप्रतीतौ प्राकट्यादिलिङ्गं प्रत्यपि स्वपरात्मनोः अतिशयानव[7]गमात् स्वात्मन एव ज्ञानकर्तृत्वानुमानानुपपत्तेः सर्वव्यवहारलोपप्रसङ्गात्। आत्मनः [8]कर्तृत्वाभ्युपगमे च सति एकत्रैव युगपत् ज्ञानस्य [9]भावाभावोपनिपातप्रसङ्गो दुर्निवार एव। न च 'घटं जानन्तं मां जानामि' इति उभयरूपं[10] प्रत्यक्षम् [11]इति शङ्कनीयम्; भवन्मते ज्ञानस्य अप्रत्यक्षत्वात् 'जानन्तं माम्' इति ज्ञानविशेषितस्य आत्मनोऽपि प्रत्यक्षत्वानुपपत्तेः। न

---

१. B omits वृत्ति

२. A: प्रतिभास, a subsequent correction.

३. A: अथावान्तर

४. B E add चित्रावयविन इव स्वावयवभेदेन नीलाद्यनेकगुणसमवायित्वम्

५. A: न्तरदेश

६. B: अथ नात्मनो

७. E: अवगमात्

८. B: कर्मकर्तृत्वा

९. E: भावाभावो ... वादप्रसङ्गो

१०. B E: रूपत्वं

११. E omits इति

च सामान्यविशेषरूपाभ्यां आत्मनः कर्मकर्तृत्वव्यवस्था संभवति ; एकस्य द्वैरूप्यानुपपत्तेः, एकस्यैव रूपस्य द्वैरूप्य[1]ानभ्युपगमात्। एतेन[2] नित्यानुमेयात्मपक्षोऽपि निरस्तो वेदितव्यः। तस्मात् आत्मा स्वयंप्रकाश एव इति स्थितम्[3]।

इति तत्त्वशुद्धौ स्वयंप्रकाशत्वप्रतिपादनप्रकरणम्।



१. B omits द्वैरूप्य
२. B: एकेन
३. B: सिद्धम्

## ॥ आत्मनः सर्वगतत्वनिरूपणं चतुस्त्रिंशम् ॥

यथेदं जगद्यौगपद्येन विश्वं वियद्व्याप्य[1] तिष्ठत्यखण्डात्मनैव ।
तथापूर्य तिष्ठत्यशेषं य आत्मा नमो विष्णवे वासुदेवाय तस्मै ॥

इदमिदानीं जिज्ञासामहे 'किं सर्वगतोऽयमात्मा किं वा असर्वगतः?'[2] इति। इह खलु वेदान्तैकदेशीयाः[3] सङ्गिरन्ते—न तावदात्मनः सर्वगतत्वमस्ति, प्रमाणाभावात्। स्यादेतत् 'आत्मा सर्वगतः, अगत्वा[4] सर्वत्र दृष्टकार्यत्वात्, आकाशादिवत्[5]' इति। तदसत्; हेतोः असिद्धत्वात् 'देहदेशे[6] एवात्मा दृष्टकार्यो नान्यत्र' इति। अथ[7] 'परोपाधिगमनत्वात् सर्वगतः, व्योमवत्' इत्युच्येत[8], तदप्यसत्[9]; देहावयवादिषु अनैकान्तिकत्वात्। अतो न आत्मा सर्वगतः। ततश्च परिच्छिन्नत्वे सति मध्यमपरिमाणस्य सावयवत्वानित्यत्वादिदोषप्रसङ्गात्[10], आत्मनश्च नित्यत्वात्, परिशेषात्[11] अणुपरिमाण एव। श्रुतिश्च भवति—

"वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥"
(Śvet., V, 9)

इति, "आराग्रमात्रो ह्यवरोऽपि दृष्टः" (Śvet., V, 8) इति च। अपि च

---

१. D: व्याप्य
२. C: किं सर्वगत आत्मा उत असर्वगत इति
३. D: देशिनः
४. D omits अगत्वा
५. C omits आदि
६. A E: देहांशे
७. D: अन्यथा परोपाधित्वात
८. D: उच्यते
९. C omits अपि
१०. C omits अनित्यत्व;
D: सावयवत्वादिति चेत्, देहदेशे एवात्मा दृष्टकार्यो नान्यत्रेति अनित्यत्वादिदोषप्रसङ्गात्
११. C drops परिशेषात्

क्वचित् अणुशब्देनैव आत्मानमाचष्टे[1] "एष आत्मान्तर्हृदयेऽणीयान्" (Maitri., VII, 7) इति। न च वाच्यम् '"आकाशवत् सर्वगतश्च नित्यः" "ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्" (Chānd., III, xiv, 3) इत्यादि-शास्त्रात् सर्वगतोऽयमात्मा अवसीयते' इति; तस्य परमात्मविषयत्वात्। न च वाच्यम् 'अणुपरिमाणत्वे सति आत्मनो[2] निखिलशरीरव्यापिसुखदुःखानु[3]सन्धानानुपपत्तिः' इति, चन्द[4]नबिन्दुवदुपपत्तेः[5]; यथा खलु लोके हरिचन्दनबिन्दुः शरीरैकदे[6]शनिक्षिप्तः[7] सन्तप्यमानं सकलं[8] शरीरं शीतलयति, तथा एकदेशस्थोऽपि सकलशरीरव्यापिसुखादीन् अनुसन्दधाति इत्यविरोधः। अथ वा आत्मनः[9] अन्तर्गमनागमनेन 'पादे मे सुखम्[10]' 'शिरसि मे वेदना' इत्यनुसन्धानसिद्धिः। तस्मात् अणुपरिमाण आत्मा—इति।

आर्हताः पुनराचक्षते—असर्वगतोऽप्यात्मा न अणुपरिमाणः, सकलशरीरव्यापिसु[11]खदुःखाद्यननुसन्धानप्रसङ्गात्; किं तु शरीरपरिमाणः। 'ननु कथं शरीरपरिमाणत्वे सति आत्मा हस्तिशरीरं [[12]उत्सृज्य मशकशरीरं प्रविशेत्[13]? प्रविशन् वा[14] हस्तिशरीरपरिमाणः कथं मशकशरीरे संमियेत[15]? मशकशरीरपरिमाणो वा हस्तिशरीरं] प्रविष्टः कथं सकलशरीरव्यापिसुखादिकार्यं अनुसन्दधीत[16]?' नैष दोषः, सङ्कोचविकासोपपत्तेः—इति।

---

१. A: वर्ण्यते
२. C: अखिल
३. C omits अनुसन्धान
४. D: हरिचन्दनवदुपपत्तेः
५. C: उपपत्तिः
६. A B: देशे
७. D: संक्षिप्तः
८. C: सकलशरीरं
९. D: आत्मनो गमनागमने
१०. A D: वेदना for सुखं
११. A C: सुखाद्यननु
१२. E omits the part bracketed.
१३. A D omit प्रविशेत्
१४. A D omit वा
१५. C D: समीयेत
१६. D adds इति

[1]तत्र [2]प्रतिविधीयते। सर्वगतोऽयमात्मा [3]भवितुमर्हति[4], निरवयवद्रव्यत्वात्, आकाशवत्[5]। न च परमाण्वादिषु अनैकान्तिकता आशङ्कनीया, परिच्छिन्न[6]द्रव्यस्य अस्म[7]द्दर्शने निरवयवत्वासिद्धेः। न च आत्मनित्यत्ववादिनं प्रति निरवयवत्वहेतुः [8]असिद्धः, [[9]सावयवत्वे अनित्यत्वप्रसक्तेः।] न च "अन्तर्हृदयेऽणीयान्" इत्या[10]द्यागमविरोधः[11]; "सत्यं ब्रह्मेत्युपासीत" "[12]स आत्मानमुपासीत" (Cf. Bṛh., I, iv, 7, 8, 15) "स क्रतुं कुर्वीत" (Chānd., III, xiv, 1) इतिवत् तस्य उपासनाविधिपरत्वात्। अपि च "मनोमयः प्राणशरीरः" (Chānd., III, xiv, 27) इत्यन्तःकरणावच्छेदं अभिधाय "तस्यान्तर्हृदयेऽणीयान्" (Chānd., III, xiv, 3) इति परिच्छेदाभिधानं[13] आत्मनः सोपाधिकस्यैव न स्वतः इति गम्यते। "[14]ज्यायान् पृथिव्या ज्यायनन्तरिक्षात्" (Chānd., III, xiv, 3) इत्यादिना च तस्यैव निरुपाधिकमहत्त्वाभि[15]धानात् मन्यामहे 'परिच्छेदाभिधानं उपाधिनिबन्धनम्' इति। [16]न च वाच्यम् 'ब्रह्मविषयत्वात् महत्त्वाभिधानस्य अणुत्ववचनं जीवस्य अविरुद्धम्' इति; एकस्यैव प्रत्यगात्मनः अन्तःकरणाद्युपाधिनिबन्धनत्वात् जीवब्रह्मविभाग[17]प्रतिभासस्य। [18]तथा उपाधिकृत एव श्रुतौ[19]वपि तदनुवादः;

---

१. C: अत्र

२. A E: अभिधीयते ; D: प्रविधीयते

३. C omits भवितुमर्हति

४. D adds इति

५. C omits आदि ; E: परिमाणादिष्व

६. D: परिच्छिन्नस्य

७. A E: आत्मदर्शने ; D: अस्मन्मते

८. A: सिद्धः

९. A E omit the bracketed part.

१०. D E omit आदि

११. C: विशेषः

१२. C omits this and in D the reading is corrupt.

१३. E: मानं for धानं

१४. E: द्यावापृथिव्या

१५. A E: मानात् ; D: धानं

१६. E omits न

१७. C: विभागं प्रति ; D omits विभाग

१८. D: ततोऽत्रोपाधि ; E: तथा चाधिकृत

१९. D: श्रुतेरपि

"तत्त्वमसि" (Chānd., VI, viii, 7) इत्येकत्वश्रुतेः। अतश्च वालाग्रश्रुतिः आराग्रमात्रश्रुतिश्च[1] उपाधिकृतमेव आत्मनः [परिच्छेदमनुवदति अपरिच्छिन्नस्वरूपप्रतिपादनाय। ततश्च अनुमानेन आत्मनः][2] सर्वगतत्वसिद्धिः[3]।

श्रुतिश्च "आत्मैवाधस्तात् आत्मोपरिष्टात् आत्मा पुरस्तात्" (Chānd., VII, xxv, 2) इत्यादिना सादरं सर्वगतत्वमाह, "आकाशवत् सर्वगतश्च नित्यः" इति च[4]। न च औपाधिकस्यापि अणुपरिमाणत्वमवकल्पते, सकलशरीरव्यापिकार्याननुसन्धानप्रसङ्गात्। न खलु चन्दनबिन्दुदृष्टान्तेन एतदुपपद्यते[5], वैलक्षण्यात्। तथा हि। चन्दनबिन्दोः सावयवत्वात् स्वावयवैरेव सकलशरीरव्यापिशैत्यहेतुत्वं[6] अवकल्पते[7]; आत्मा तु[8] निरवयवः कथं तत्सालक्षण्यं भजेत[9]? न च अणुपरिमाणस्यापि त्वगिन्द्रियसम्बन्धात् सकलशरीरव्यापिकार्योपपत्तिः[10]; तथा सति चरणतल[11]गतकण्टक[12]वेदनाया अपि[13] शिरसि प्रसङ्गात्। न च गन्धवत् एकदेशस्थस्यापि[14] संविद्गुणस्य[15] व्याप्तिः; गन्धस्यापि सूक्ष्मद्रव्याश्रयानुमानात्[16] आश्रयहीनस्य व्याप्त्यसिद्धेः[17]। न च आत्मनः अन्तःशरीरे[18] गमनमवकल्पते[19], चेतनस्य[20] गमनासंभवात्। अचेतनस्य किल[21] चेतनाधिष्ठितस्य देहादेः गमनमुपलभामहे। न च उपाधि-

---

१. C: श्रुतिः

२. C omits the portion within brackets.

३. E drops सिद्धिः

४. D omits च

५. C E: तदुप

६. A: व्याप्तिः शैत्य

७. C: कल्प्यते

८. C omits तु

९. C: भजेत्

१०. D: व्याप्त्युपपत्तिः

११. D omits तल

१२. E: कन्दुक for कण्टक

१३. D omits अपि

१४. A: देशस्यापि

१५. D: गुणव्याप्तिः

१६. C: सूक्ष्मरूपाश्रया; D: सूक्ष्माश्रयानुगमात्

१७. E: सिद्धिः

१८. D: शरीरगमन

१९. C: कल्प्यते

२०. A E: चैतन्यगमना

२१. D omits किल

तोऽपि स्वतो[1] गमनादिरहितवस्तुनो वास्तव[2]गमनादि संभवति, विभ्रममात्रत्वात् तत्प्रति-भासस्य। ततश्च[3] आत्मनः अणुपरिमाणत्वे सति तस्य एकदेशावस्थानात्[4] 'पादे मे वेदना', 'शिरसि मे वेदना' इति[5] सर्वशरीरव्यापिसुखदुःखाद्यनुभवो न स्यात्। अपि च परिच्छिन्नत्वे सति अनित्यत्वं आत्मनो घटादिवत् दुर्वारं प्रसज्येत। तस्मात् न अणुपरिमाणोऽयमात्मा। नापि देहपरिमाणः, मशकदेहपरिमाणस्य हस्तिशरीरमनु-प्रविष्टस्य[6] सकलशरीरव्यापिसुखदुःखाद्यनुसन्धानानुपपत्तेः[7]। न च सङ्कोचविकारसं-संभवः[8], निरवयवत्वात् आत्मनः। सावयवत्वे[9] च शरीरान्तरे अवयवान्तरारंभात्[10] अनित्यत्वप्रसङ्गः[11]। न[12] च तद्युक्तम्, पुण्यापुण्ययोः अकृताभ्यागमकृतविप्रणाश-प्रसङ्गात्। तस्मात् सर्वगतस्यैव[13] आत्मनः अन्तःकरणोपरागात्[14] अवच्छेदप्रतिभासः। तस्य च सावयवत्वात् परिणामित्वात् च अहमित्याद्यवभासाकारेण[15] घटाद्यवभासाकारेण[16] च[17] परिणाम[18] उपपद्यते। तत्र च अहंप्रत्ययोपाधिक आत्मा तद्द्वारेण 'अहं मनुष्यः' इति सकलशरीरं आत्मत्वेनाभिमन्यमानो घटादिवृत्तिद्वारेण[19] च विषयैः सह ज्ञातृज्ञेय-भावेन सम्बध्यते। तदेवं आत्मनो निखिलव्यवहारप्रतिभास उपपद्यते। तस्मात् अनुमानागमार्थापत्तिभिः आत्मा सर्वगतः इति सिद्धम्।

इति तत्त्वशुद्धौ आत्मनः सर्वगतत्वनिरूपणप्रकरणम्।



---

१. C: स्वभावतो
२. D: वास्तवं न
३. C: अतश्च
४. A E: देशेऽवस्थानात्
५. D: इत्यादि
६. C D: देहप्रविष्टस्य
७. A: द्यनुभवानुपपत्तेः; D: दुःखानुपपत्तेः
८. E: विकासौ संभवतः
९. D omits सावयवत्वे च
१०. D: वान्तरारंभात्, भावे वा अनित्यत्वप्रसङ्गः
११. A: प्रसक्तिः
१२. C: न चैष युक्तः
१३. D omits एव
१४. D: उपरमात्
१५. C: द्याभासाकारेण
१६. A C E omit घटाद्यवभासाकारेण
१७. A E omit च
१८. A: परिणाममुपपद्यते
१९. D: प्रतिपत्तिद्वारेण

## ॥ साक्षिस्वरूपानिरूपणं पञ्चत्रिंशम् ॥

[1]निश्शेषतत्त्वमनवद्यचिदेकरूपो[2]
निर्भासयन् निखिलसाक्षितया विभाति ।
आत्मा निरस्तनिखिलद्वितयो निरीहो
यस्तं नमामि शिरसा हरिमञ्जनाभम् ॥

इदमिदानीं विचार्यते[3] ‘ किं प्रमात्रादिव्यतिरिक्तः साक्षी नाम कश्चिदस्ति न[4] वा?’ इति । तत्र—न साक्षी नाम कश्चिदस्ति, प्रमात्रादिचतुष्टयेनैव[5] समस्तव्यवहारसंभवात्, साक्षिकल्पनया[6] विना अनुपपत्त्यभावात्, साक्षिस्वरूपानिरूपणाच्च[7] । तथा हि । किमसौ द्रष्टृस्वभावः दृश्यस्वभावो वा[8]? द्रष्टृस्वभावश्चेत्, तदापि[9] द्वयी[10] गतिः,

---

१. D prefixes some more verses, probably from the pen of the scribe:

वराङ्गे दधानं घुनघाः कुशस्य प्रपूरे स्फुरच्चन्द्रखण्डं ललाटे ।
वहन्तं शयाग्रेशिरं कस्य नित्यं भजेऽहं सदा दानशौण्डं तमीशम् ॥

अहो महादेवममुं विहाय महेन्द्रमुख्यांश्च भजन्त्यसन्तः ।
तीरे घुनघा अमृतं विहाय खनन्ति कूपं तृषिताः कुबुद्धयः ॥

वेदान्ततत्त्वशुद्ध्याख्ये प्रकरणानां त्रयं मुदा ।
लिखितं गुरवे दत्तं शिष्यप्रीतिकराय च ॥

२. A: रूपम्

३. C omits these words ; D: चिन्त्यते

४. A E: वा न वेति ; D omits up to कश्चिदस्ति following.

५. D: त्रयेणैव

६. C: कल्पनां विना

७. D omits च

८. D: वा स्यात्

९. C: तत्र ; D: तदपि

१०. A: द्वितीयगतिः

जीवो ब्रह्म वा[1]। जीवान्तर्भावे सति प्रमातैवासौ भवेत्; न साक्षित्वं नाम अपरमस्ति। ब्रह्मान्तर्भावे तु तस्य श्रुत्यैकसमधिगम्यत्वात् संसा[2]रसमये अनाविर्भावाच्च साक्षिप्रत्यक्षं नाम व्यवहाराङ्ग[3]त्वेन वेदान्तवादिपरिकल्पितं न[4] सिध्येत्। दृश्यस्वभावश्चेत्[5], तस्य घटादिवदेव वेद्यत्वात् न अन्य[6]मवभासयेत्। कुतस्तत्र साक्षित्व[7]सिद्धिः? सकलकरणागोचरत्वाच्च[8] न प्रत्यक्षप्रमाणगम्यः। नाप्यागमो जीवब्रह्मणोः अन्यतरस्य तद्व्यतिरिक्तस्य वा साक्षित्वं प्रतिपादयन् दृश्यते। तस्मात् प्रमाणाभावात् न साक्षी नाम कश्चिदस्ति—इति[9] भेदपरिच्छेदविभ्रमा[10]भिभूतचेतसो अ[11]नाद्यनिर्वचनीयाविद्या[12]मायया मोमुह्यमानाः सञ्चरन्ते।

तदेतत् प्रत्याचक्ष्महे। सर्वैरपि साक्षिस्वरूपमभ्युपगन्तव्यम्, अन्यथा व्यवहारानुपपत्तेः। तथा हि। ज्ञानरागद्वेषप्रयत्नादयः तावत् सकलवादिसंप्रतिपन्ना दृश्यन्ते। न तेषां प्रमाणगम्यत्वं अस्ति। तथा हि। प्रत्यक्षं तावत् द्विविधमभ्युपगतम्[13], बाह्यमाभ्य[14]न्तरं च। न तावत् बा[15]ह्यं प्रत्यक्षं ज्ञाना[16]दीन् कटाक्षेणापि वीक्षितुं क्षमते; तस्य आत्मनि प्रवृत्त्यभावात्, आत्मधर्मत्वा[17]भ्युपगमाच्च तेषाम्। न[18] च मनोजन्यप्रत्यक्षगम्य[19]त्वमपि तेषां संभवति, अनिष्ट[20]प्रसङ्गात्। तथा हि[21]। अ[22]स्वयंप्रकाश-

---

१. A omits वा
२. D: संसारमयेनाभासाच्च
३. D: राङ्गं
४. A: तन्न
५. D adds तर्हि
६. C: अर्थ for अन्य
७. D omits त्व
८. D omits च
९. E omits इति
१०. A E: विभ्रमादिहतचेतसो
११. A E omit अनादि
१२. D omits अविद्या and reads मायामोहेन मुह्यमानाः
१३. D: गन्तव्यम्
१४. D: आन्तरं for आभ्यन्तरं
१५. C E: बाह्यप्रत्यक्षं
१६. C: ज्ञानादिग्राहकं तस्यात्मनि
१७. D: धर्मत्वाच्च
१८. D: मनोगम्यत्वमपि तेषां न संभवति
१९. C: प्रत्यक्षत्वमपि
२०. D: अनित्य for अनिष्ट
२१. A E: च for हि
२२. D: विज्ञानास्वयंप्रकाशत्ववादिपक्षे

ज्ञानवादिपक्षे ज्ञानमेव तावत् न सिध्यति। तस्यापि प्रत्यक्षान्तरगम्यत्वे, तस्यापि [1]तथैव प्रत्यक्षान्तरगम्यत्वं तस्यापि तथैव इति युगपदेकस्मिन् [2]अनन्तानि ज्ञानानि प्रसज्येरन्। न चैतदिष्टम्। "युगपत् ज्ञानानुत्पत्तिः मनसो लिङ्गम्" इति हि[3] भवतां अभ्युपगमः। नापि [4]विनश्यदवस्थं पूर्वज्ञानं उत्तरज्ञानं [5]साधयेत्, [6]विनश्यद्भावावस्थानिरूपणात्। [7]तथा हि। किं विनश्यदवस्थत्वं नाम [8]ज्ञानस्य [9]सत्त्वं असत्त्वं [10]उभयविलक्षणत्वं वा? सत्त्वं चेत्, ज्ञान[11]द्वययौगपद्यप्रसङ्गः। असत्त्वं चेत्, स्वयमविद्यमानं [12]विज्ञानं [13]कथं प्रत्यक्षं भवेत्? उभयविल[14]क्षणं चेत्, अनिर्वचनीयत्वात् न वस्तुभूत[15]ज्ञानसिद्धिः। तस्मात् न ज्ञानं प्रत्यक्षगम्यम्। अत एव न [16]अन्यमपि साधयेत्। अथ स्वयं अप्रत्यक्षमपि ज्ञानं चक्षुरादिवत् स्वविषयरागादीन् साधयति इत्यभिप्रायः, तर्हि चक्षुरादिवत् [17]प्रकाशकत्वे सति [18]करणत्वप्रसङ्गात् प्रकाशान्तरो[19]त्पादकेन [20]प्रकाशकत्वं स्यात्। तदपि प्रकाशान्तरं चक्षुरादि[21]तुल्यं चेत्, प्रकाशान्तर[22]करणमेव, तदपि तथैवेति प्रकाशमालाप्रसङ्गात् न किञ्चिदपि सिध्येत्[23]। ततः [24]प्रतिभासमानस्यैव ज्ञानस्य तत्साधकत्वं वक्तव्यम्। ज्ञानप्रतिभासश्च उभयविधप्रत्यक्षेणापि न संभवति

---

१. A E तदेव
२. D: अनन्तानित्यज्ञानानि ;
   E omits अनन्तानि
३. D omits हि
४. A: नश्यदवस्था
५. D: साधयति
६. A: नश्यद्भावानिरूपणात् ;
   D: विनश्यदवस्थानिरूपणात्
७. D omits तथा हि
८. D omits ज्ञानस्य
९. C adds उत after सत्त्वं
१०. D: सदसत्त्वं for उभयविलक्षणत्वं
११. D: द्वयस्य
१२. D E omit विज्ञानं
१३. A E: कथमन्यस्य साधकं भवेत्
१४. A E: क्षणत्वं
१५. D: विज्ञान
१६. C: अर्थमपि
१७. D: प्रकाशत्वे
१८. D: कारकत्व
१९. C: दकत्वेन
२०. A E: प्रकाशत्वं
२१. C: तुल्ये
२२. A: कारण ;
    D: कारक
२३. C: सिध्येत
२४. D: तत्प्रतिभास

इत्युक्तम्। नापि ज्ञानादि[1]व्यवहार[2]लिङ्गेन वा[3] प्राकट्यलिङ्गेन वा स्वात्मनि[4] ज्ञानानुमानं [संभवति[5], ज्ञानावगमात्] प्राक् व्यवहारासिद्धेः[6]। तथा हि। ज्ञानस्य[7] प्रदीपवत् तमोनिवर्तनेनैव विषयावभासकत्वे प्रदीपस्य अनवभासने विषयस्यापि अनवभासः[8] स्यात्। ततश्च ज्ञानावगमात्[9] प्राक् विषयप्राकट्यस्य व्यवहारस्य वा[10] असंभवः। अथ चक्षुरादितुल्यत्वं ज्ञानस्य कल्प्येत, तदा प्रकाशान्तरजननेनैव प्रकाशकत्वं वाच्यम्। तच्च प्रकाशान्तरं[11] जडत्वात् घटादिवत् संवेद्यं स्यात्। तथा सति तच्च घटादिज्ञान-संवेद्यं ज्ञानान्तरसंवेद्यं वा? पूर्वस्मिन् पक्षे घटादिवत् प्राकट्यमपि[12] प्राकट्यान्तरेण साधयेत्। तथा तदपि प्राकट्यं तज्ज्ञानादेव चेत् सिध्येत[13], तथा[14] तदपि प्राकट्यान्तरेण इत्यनवस्थानात् न किञ्चिदपि प्राकट्यं सिध्येत्। तथा सति विषयासिद्धिः, प्राकट्या-नवभासे विषयावभासानुपपत्तेः। प्राकट्यमपि[15] [[16]इन्द्रियवत् अनवभासमानमेव विषयाव-

---

१. A: नापि इहानादि

२. D omits व्यवहारलिङ्गेन वा

३. A omits वा

४. C: स्वात्मविज्ञाना

५. E omits the part bracketed.

६. A: सिद्धेः ;
D reads: प्राक् व्यवहारेण विषय-प्राकट्येन स्वपरसम्बन्धाभावात्। अथ स्वात्मनैव ज्ञानस्य कर्तृकर्मावगतिः तथापि तथैव ज्ञानक्रिया समधिगतैव इति नानुमानेन कृत्यमस्ति। नार्थापत्तिगम्यं व्यवहारविषयप्राकट्यस्य वा स्वात्मसम्ब-न्धावगमे सति स्वात्मनि etc. From सति onwards the other mss. also have the text a few lines hence· The text quot-ed above is found in D alone.

७. A corrupts the text here· In C the text runs: ज्ञानं तावत् प्रदीपवत् विषयावभासकं इन्द्रिय-वद्वा स्यात्। न तावत् प्रदीपवत् तमो निवर्तते ; न विषयावभासकत्वं दीप-स्येव। ज्ञानस्याप्यनवभासने विषयस्या-प्यनवभासः स्यात्। etc.

८. E: अनवभासात्

९. C: ज्ञानवभासात्

१०. A: च for वा

११. A E: प्रकाशान्तरजन्यत्वात्

१२. A omits प्राकट्यमपि

१३. A E: सिध्येत

१४. A: तथापि for तथा तदपि

१५. C: अतश्चक्षुरादिवत् अनवभासमानमेव etc.

१६. E: इन्द्रियमपि विज्ञानादिसंवेद्यं प्राक-ट्यं वाच्यम्, thus omitting a few words bracketed.

भासकं चेत्, अनवस्था उक्ता। ज्ञानान्तरेण चेत्, प्राकट्यासिद्धिः[1]। तदा तस्य संवेद्यत्वात् तद्विषय]मपि ज्ञानान्तरसंवेद्यं प्राकट्यान्तरं[2] वाच्यम्। तथा[3] तद्विषयं तथा तद्विषयं इत्यनवस्थानात् न किञ्चिदपि सिध्येत्[4]। तस्मात् ज्ञानावगमात् प्राक् व्यवहारस्य प्राकट्यस्य वा[5] सिध्यभावात् व्यवहारलिङ्गेन वा प्राकट्यलिङ्गेन वा स्वात्मनि ज्ञानानुमानम् इत्येतत् दुरुपपादम्[6]। अत[7] एव व्यवहारादिकार्यानुपपत्तिरपि न स्वात्मनि ज्ञानमवगमयितुं शक्नोति, कल्पकस्य व्यवहारादेः ज्ञानावगमात् प्रागसिद्धत्वात्, स्वात्मनैव सम्बन्धावगमे[8] सति स्वात्मनि[9] ज्ञानकल्पनाभावात्। तदेवं[10] अस्वयंप्रकाशज्ञानवादिपक्षे ज्ञानासिद्धेः[11] तत्प्रकाश्यरागादिधर्मस्य तदाश्रयात्मनश्च[12] असिद्धिः[13]। स्वयंप्रकाशज्ञानवादिपक्षेऽपि[14] ज्ञानस्वरूपं आलोचनीयम् 'किं[15] संवेदनं नाम गुणो द्रव्यं वा[16]?' इति। गुणश्चेत्, स्वाश्रयजन्मविनाशव्यतिरेकेण तस्य जन्मविनाशौ न स्याताम्[17]। [तथा[18] चायं प्रयोगः 'विवादाध्यासितं] संवेदनं[19] स्वाश्रय[20]जन्मविनाशव्यतिरेकेण जन्मविनाशवत् न भवति[21], प्रकाशगुणत्वात्, प्रदीपादिप्रकाशगुणवत्[22]' इति। अथ[23] वा 'संवेदनं यावत्स्वाश्रयभावि, प्रकाशगुणत्वात्, प्रदीपादिप्रकाश[24]गुणवत्' इति। तथा

---

१. C: सिद्धिः
२. A E omit अन्तर
३. A E: तत्राप्येत्रमित्यनवस्थानात्
४. C: सिध्येत
५. C: च
६. A: पादकम्
७. C omits अत एव
८. All except C give अनवगमे
९. A: स्वात्मज्ञानकल्पकोभावात्
१०. A: तदेव स्वयंप्रकाश etc.
११. A: सिद्धेः
१२. A: तदात्मनाश्रयात्मनश्चासिद्धिप्रसङ्गः
१३. D: असिद्धिप्रसङ्गः
१४. D omits अपि and gives विज्ञान for ज्ञान
१५. D drops किं
१६. C: चेति
१७. D: तस्यां for न स्याताम्
१८. C drops the words bracketed.
१९. D omits सं
२०. A: स्वाश्रयं
२१. C omits भवति
२२. D: प्रदीपप्रकाशादिगुणवत्
२३. C: तथा for अथवा
२४. A omits गुण ; D: प्रकाशादिगुण

च[1] 'संवेदनं सर्वदा सत् भवितुमर्हति[2], सर्वगतद्रव्यविशेष[3]गुणत्वात्, शब्दवत्; आत्मगुणत्वाच्च[4] तद्गतविभुत्ववत्[5]' इति। न च[6] रागादौ अनैकान्तिकत्वम्; रागादेः आत्मगुणत्वस्य परेषां असंप्रतिपन्नत्वात्। न च ज्ञानस्य अनित्यत्वपरिच्छेदप्रतिभास[7]-विरोधः, तस्य [[8]भ्रान्तित्वात्। दर्शितं च तस्य] भ्रान्तित्वं स्वयंप्रकाशत्वप्रकरणे। तदेवं नित्यसर्वगतप्रकाशवस्तुसिद्धेः[9] तेषां अनिच्छतामपि साक्षिसिद्धिः[10]। न च द्रव्यत्वं संवेदनस्य संभवति; तस्य नित्यत्वे[11] सति अनाश्रयत्वासंभवात्[12] पुनरपि[13] साक्षि-सद्भावाभ्युपगमप्रसङ्गात् तस्य तल्लक्षणत्वात्; अनित्यत्वे सति स्वकारणावयवा[14]श्रयत्वात् संवेदनस्य आत्मसमवायप्रतीतेः भ्रान्तित्वप्रसङ्गात्[15]। तस्मात्[16] सर्ववादिनामपि[17] नित्य-सर्वगतस्वयंप्रकाशतया युगपत् सकलवस्तुसाधनसमर्थं एकतत्त्व[18]मन्तरेण समस्तव्यवहार[19]-सिद्धिः। अतो[20] व्यवहारान्यथानुपपत्त्या साक्षिसद्भाव[21]सिद्धिः। श्रुतिश्च भवति "कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" (Śvet., VI, 11) इति।

यत्पुनरुक्तम् 'साक्षिणो जीवब्रह्मणोः अन्यतरपक्षान्तर्भावात्[22] तद्व्यतिरिक्त[23]-चेतनासंभवात् अचेतनत्वे साक्षित्वानुपपत्तेः दुर्निरूपत्वम्[24]' इति, तदप्य[25]ज्ञानतिमिरपि-

---

१. C D omit च
२. C omits भवितुमर्हति
३. A omits विशेष
४. D drops च
५. D: महत्त्ववत्
६. D: ननु for न च
७. D: प्रतिभासः। तस्य ; E: विरोधात् तस्य
८. E omits the words within brackets.
९. D: सिद्धौ
१०. C: साक्षी सिद्धः
११. D: निरवयवत्वे
१२. D: अनाश्रयत्वाभावात्
१३. C omits अपि
१४. A D drop अवयव
१५. E: प्रसङ्गः
१६. D omits तस्मात्
१७. A E: वादिना नित्य ; D also omits अपि
१८. A E: एकत्वमन्तरेण
१९. A: सिद्धि
२०. D: सतो
२१. A E: संभाव
२२. D E: अनन्तर्भावात्
२३. D: रिक्तत्वे
२४. C: अनिरूप्यं
२५. D: तदप्यसारम्, अज्ञान etc.

[1]हितविवेक[2]ज्ञानैनयनैः उद्भावितं [[3]न प्रमाणसंस्पर्शि इति न वयं बहुमन्यामहे। तथा हि]। इदमत्र [4]भवन्तः प्रष्टव्याः ' "इदं रजतम्" इत्यत्र [5]इदमंशः किं रजतपक्षपाती किं वा शुक्ति[6]शकलपक्षपाती ?' इति। रजतपक्ष[7]पाती चेत्, [8]बाध्यत्वात् 'इयं शुक्तिः' इति प्रतीतिः न स्यात्; स च प्रतिभासविरुद्धः [9]इति। शुक्तिकाशकलपक्षपातित्वे[10] अनवभासप्रसङ्गः[11]। [12]तदुभयं प्रमाणप्रतिभासविरुद्धम्। न च अध्यस्यमानाधिष्ठानविलक्षणस्य भ्रान्तौ प्रतीतिरस्ति। अथायमभिप्रायः 'परमार्थतः शुक्तिप[13]क्षत्वेऽपि 'इदं रजतम्' इति सामानाधिकरण्यात् इदमंशस्य प्रतिभासतो रजतपक्षत्वं, ततश्च न प्रमाणविरोधः, नापि प्रतिभासविरोधः' इति, इहापि तर्हि परमार्थतो ब्रह्मत्वेऽपि प्रतिभासतः साक्षिणः संसार्य[14]न्तर्भाव एव, ततश्च न प्रमाणविरोधः, नापि प्रतिभासविरोधः[15], इति सन्तोष्टव्यम्। इयांस्तु विशेषः।[16] शुक्तित्वं [17]इदंमंशात् अन्यदेव [18]सत् भ्रान्तिसमये अनवभासमानं प्रमाणेन इदमंशात्मना व्यज्यते; त[19]च्च तस्य रजतात्म[20]त्वोपमर्देन अवभासते; ब्रह्मभावः पुनः साक्षिमात्रभूत एव सन् अविद्यया संसारसमये अनभि[21]व्यज्यमान इव भवति; "तत्त्वमसि" (Chānd., VI, vii, 7) [[22]इति

---

१. C: पिहितदृग्भिः
२. D: विज्ञान
३. C omits the portion within brackets.
४. C: भवन्तं
५. D: इयमितीदमंशः
६. D omits शकल
७. A E: पातित्वे; D: पाते
८. A D E: बाध्यत्वप्रसङ्गः। शुक्तिशकलपक्षपाते
९. This इति seems unnecessary.
१०. D: पाते
११. D: प्रसङ्गात्
१२. D: उभयलक्षणत्वं प्रतिभासविरुद्धम्
१३. D: शकलपक्षपातित्वेऽपि
१४. E: सर्वान्तर्भाव
१५. E omits विरोधः
१६. C D: भेदः
१७. A E omit इदं
१८. D: स भ्रान्ति; E: संभ्रान्ति
१९. D: तत्तस्य
२०. D: त्मतोपमर्देन
२१. D: समयेनव्यमान इव
२२. E drops the bracketed part

प्रमाणज्ञानात्[1] अज्ञानाभिभवे सति स एव साक्षी संसारोपमर्देन अवभासमानो ब्रह्मभावः[2] इत्युच्यते; साक्षिरूपस्य[3] स्वयंप्रकाशत्वेन[4] प्रत्यक्षत्वाच्च[5] न प्रमाणवेद्यत्वप्रसङ्गः। तस्मात् प्रमाणप्रमातृप्रमेय][6]प्रमितिभेदविभ्रमा[7]धिष्ठानतया तत्साक्षिणः प्रतिभासतः[8] तदन्तर्भावेऽपि वस्तुतो[9] ब्रह्मत्वमेव इति न किञ्चिदनुपपन्नम्। तत्र सर्वस्य साक्षिवेद्यत्वेऽपि[10] किञ्चित् अन्तःकरणवृत्त्युपाधिद्वारेण साक्षिवेद्यं[11] भवति, किञ्चित् तदनपेक्षया। सर्वत्र[12] घटादिवस्तु बुद्धिवृत्तिव्यवधानेन सिध्यति। तत् [प्रमाणवेद्यं[13] इति स्थितिः। यत्तु ज्ञाना[14]ज्ञानसुखदुःखादि] तदनपेक्षमेव सिध्यति [तत्[15] साक्षिवेद्यं इति] व्यवहारः। तस्मात् प्रत्यक्षागमार्थापत्तिभिः साक्षिस्वरूप[16]सिद्धिः इति सर्वं सुव्यवदातम्।

इति तत्त्वशुद्धौ साक्षिस्वरूपनिरूपणप्रकरणम्।



---

१. A: ज्ञानमज्ञाना

२. D: ब्रह्मैव भवत्यन्त इति साक्षि

३. A: स्वरूप

४. D: कत्वेन

५. D omits च

६. D omits प्रमिति

७. A: विभ्रमस्याधिष्ठानतया

८. D: प्रतिभासः

९. A: वस्तुना

१०. D omits अपि

११. A corrects this into वेद्यत्वं

१२. E: यत्र
C: यत्तद्घटादि
D: यत्तत्र घटादि तदनपेक्षमेवेति सिध्यति, तत्साक्षिवेद्यमिति व्यवहारः, thus omitting the part bracketed.

१३. D omits the portion within brackets.

१४. C omits अज्ञान

१५. A omits the words within brackets.

१६. D: साक्षी सिध्यतीति

## ॥ ऐकात्म्यनिरूपणं षट्त्रिंशम् ॥

शुद्धानन्दोऽनन्तसंवित्स्वरूपो निर्भेदो यैः क्षेत्रजातं[1] समस्तम्[2] ।
व्याप्यानेको[3] भाति देहादिभेदैः[4] विश्वात्मानं नौमि तं वासुदेवम् ॥

इदमिदानीं[5] चिन्त्यते[6] ‘ किमात्मा प्रतिशरीरं भिन्नः किं वा सर्वशरीरेषु एक एव ?’ इति । इह खलु भेद[7]विभ्रमाभिनिवेशकर्कशा[8]शयतया वस्तुतत्त्वमजानन्तो जात्यन्धगजदृष्टिवत् अनेकधा आत्मानं परिकल्पयन्तो द्वैत[9]वादिनः सञ्जिरन्ते ‘ प्रति-शरीरं आत्मानो[10] भिन्नाः’ इति । तथा हि—प्रत्यक्षेण तावत् ‘त्वम, अहम्[11], असौ’ इति शरीरान्तरगतात्मनोऽन्यमेव स्वात्मानं उपलभामहे । न चायं भेदप्रतिभासो विभ्रमः, कारणदोषबाधक[12]प्रत्ययानुपलंभात् । अपि च अनुमानेनापि आत्म[13]भेदमवगच्छामः । तथा हि[14] । ‘विवादा[15]ध्यासितं प्रतिवादिशरीरं वादिशरीरगत[16]आत्मनो भोगायतनं न भवति, वादिशरीरात् अन्यशरीरत्वात्, गतप्राणशरीरवत्’ इति[17] । तथा[18] ‘ विवादास्पदी-भूतानि स्वसंख्यासंख्येयात्मभिः आत्मवन्ति, शरीरत्वात्[19], प्रतिवादिशरीरवत् ’ इति । तथा[20] ‘[21]देवतिर्यङ्मनुष्यगतानि सुखदुःखादीनि[22] भिन्ना[23]श्रयाणि भवितुमर्हन्ति[24],

---

१. E: यत्र जातं
२. D: क्षेत्रजाते समस्ते
३. D: व्यस्तो नैको
४. A: भेदे
५. C omits इदमिदानीं चिन्त्यते
६. D: विचार्यते
७. A: भाविभ्रम
८. D: कर्कशतया
९. A wrongly corrects this into अद्वैत
१०. D: आत्मा भिन्नः
११. D: अयं अहं
१२. E omits बाधक
१३. D: अभेदं
१४. A omits हि
१५. C omits this word.
१६. D omits गत
१७. All except C omit इति
१८. C: तथा च
१९. A C E: शरीरव्यक्तित्वात्
२०. D E omit तथा
२१. C omits देव
२२. C omits आदि
२३. A E: धर्माणि विभिन्ना
२४. C omits भवितुमर्हन्ति

युगपत् वर्तमानविरुद्धानेकधर्मत्वात्, सन्तापशैत्यादिवत्' इति। अर्थापत्तिरपि आत्मभेदं कल्पयति[१]। तथा हि। 'सर्वशरीराणां[२] एकचेतनाधिष्ठेयत्वे सति अशेषशरीर[३]गतसुखदुःखाद्यनुसन्धानप्रसङ्गः[४]। न च तथा[५] दृश्यते। ततश्च अन्योन्यभोक्त्रनुसन्धानमन्तरेण प्रतिशरीरं[६] व्यवस्थितसुखदुःखादिभोगैः[७] अनुपपद्यमानो भोक्तृभेदं कल्पयति' इति[८]। श्रुतिश्च आत्मभेदं दर्शयति "सर्व एते आत्मानो व्युच्चरन्ति" (Maitri., VI, 32) इति। न हि बहुवचनं एकस्मिन्नेव[९]ात्मनि संभवति। अपि च विरुद्धानेकफलोद्देशेन[१०] एककालानुष्ठेयानेकसाधनविधायि शास्त्रं नियोज्यभेदमन्तरेण नावकल्पते। न हि चेतनादन्यस्य नियोज्यत्वमस्ति। ततश्च श्रुतार्थापत्तिरपि चेतनभेदं गमयति[११]। तदेवं प्रत्यक्षानुमानागमार्थापत्तिभिः प्रतिशरीरं आत्मभेदो निश्चितः। तस्मात् ऐकात्म्यप्रतिपादक[१२]शास्त्रं [१३]प्रत्यक्षादिप्रमाणविरोधात् अपापश्लोकश्रवणवत्[१४] अर्थवादः—इति।

तदेतन्निराकुर्महे। न खलु शुष्कतर्केण आत्मभेदसिद्धिः, "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" (Śvet., VI, 11) "नान्योऽतोऽस्ति द्रष्टा" (Bṛh., III, vii, 23) "स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः" इत्याद्य[१५]ागमप्रामाण्यादेव[१६] ऐकात्म्यनिश्चयात्[१७]। न चायं अर्थवादः, विधिप्रकरणे श्रवणा[१८]भावात्। नापि विधिः कल्पयितुं शक्यः, "तमेव

---

१. A C E: साधयति
२. D: सर्वचेतनशरीराणां
३. D: एकशरीरकृत ;
A omits शरीरगत
४. C: प्रसङ्गे
५. C omits तथा
६. D: शरीरव्यव
७. D: भेद for भोग
८. C omits इति
९. C omits एव
१०. A E: फलोच्छेदेन
११. A E: व्यवस्थापयति
१२. C: पादकं शास्त्रं
१३. D E: अध्यक्ष
१४. A D E: अपापश्लोकवत्; C: 'अपाम सोमं अमृता अभूम' श्लोकश्रवणात्
१५. All mss. except A omit आदि
१६. D omits एव
१७. E: निश्चयः
१८. D: सवर्णाभावात्

विदित्वा अतिमृत्युमेति" (Śvet., III, 8) इति ऐकात्म्यविज्ञानेन[१] परम-पुरुषार्थश्रवणात्[२]। न च प्रमाणान्तरविरोधात् एव[३] अर्थवादत्वम्; किं तु[४] अर्थवादस्य सतः[५] प्रमाणान्तरविरोधे सति अन्यपरत्वात् अप्रामाण्यम्। न हि तत्परवाक्यस्य प्रमाणान्तरविरोधनिमित्तं अप्रामाण्यं क्वचित् दृष्टम्। न च ऐकात्म्य-विज्ञानस्य भेदज्ञानेन[६] विरोधोऽस्ति, विद्याविद्याविषयत्वेन प्रामाण्या[७]प्रामाण्यस्य व्यवस्थि[८]-तत्वात्। तथा च[९] श्रुतिः "यत्र हि द्वैतमिव भवति" इति इव–शब्देन द्वैतप्रपञ्चस्य मिथ्यात्वमभिधाय "तदितर इतरं पश्यति" (Bṛh., IV, v, 15) इति तस्यामेव[१०] अवस्थायां भेदव्यवहारं दर्शयति। विद्याविषये[११] च "यत्र त्वस्य सर्वमात्मैवाभूत्" (Bṛh., IV, v, 15) इति सकलव्यवहाराभावं[१२] शुद्धबोधरूपेण अवस्थानं च कथयति। अपि च 'विवाद[१३]गोचरापन्नानि शरीराणि प्रतिवाद्यात्मनैव[१४] आत्मवन्ति भवितुमर्हन्ति[१५], शरीरव्यक्तित्वात्, प्रतिवादिशरीरवत्[१६]'। तथा 'प्रतिवादि-शरीर[१७]व्यतिरिक्तशरीरगतात्मा[१८] धर्मी प्रतिवाद्यात्मनः अर्थान्तरं न भवितुमर्हति[१९], चेतन-त्वात्, प्रतिवादिशरीरात्मवत्[२०]'। न च वाच्यम् 'आत्मनां सर्वगतत्वात्[२१] प्रतिवाद्या-

---

१. C omits वि
२. D: स्मरणात्
३. D omits एव
४. E omits किं तु
५. A D correct it into सतः
६. C: विज्ञानेन
७. A D: प्रामाण्यस्य
८. E: ण्यस्यावस्थितत्वात्
९. D: हि for च
१०. A D E omit एव
११. D: विषयत्वे
१२. A: राभावशुद्ध ;
　E: व्यवहारे भावगूढशुद्ध
१३. D: वाद for विवाद
१४. D drops एव
१५. C omits भवितुमर्हन्ति
१६. A E omit this phrase and तथा
१७. A: शरीरमप्यतिरिक्त
१८. A: गतात्मधर्मि ;
　C omits धर्मी
१९. C: भवति
२०. D E: गतात्मवत् तथैवावभासप्रसङ्गः। गत in A was struck off subsequently.
२१. D: सर्वशरीरसंयोगात् सर्वगतात्मवादिनां प्रतिशरीरं प्रतिवाद्यात्मनात्मत्वं सिद्धमेव साध्य इति।

त्मनः सर्वशरीरसंयोगात् सर्वगतात्मवादिन :सर्वशरीराणां प्रतिवाद्यात्मनात्मवत्त्वं सिद्धमेव साध्यैते[1] ' इति ; सर्वशरीराणां एकचेतनं प्रति भोगायतनत्वैस्यैव[2] सिषाधैयिषितत्वात्[3], ' एकैस्यैव[4] ' इति आत्मान्तराभावस्य परेषां अनिष्टस्य साध्यत्वाच्च ।

अपि[5] च व्यवहारोऽपि ऐकात्म्यमन्तरेण अनुपपन्नः । तथा[6] हि । प्राभाकराणां तावैत्[7] मनःसंयुक्तात्मप्रदेश एव[8] संविदोऽभ्युपगतत्वात् न तथा[9] घटाद्यर्थसम्बन्धः । न हि संवेदनेन असम्बद्धस्य[10] विषयस्य तत्प्रैकाश्यत्वमवकल्पते[11], एकैस्मिन्नेव[12] संवेदने सर्वार्थावै[13]-भासप्रसङ्गात् । [स्यादेतत्[14] ' अस्त्येव संवेदनेन तद्विषयस्य[15] घटादेः[16] जन्यजनकलक्षणः सम्बन्धः ' इति । तर्हि अदृष्टेन्द्रियमनसामपि घटसंविज्जनकत्वात्[17] तथैवावभास-प्रसङ्गः ।] अथ ' कर्मतया जनकत्वम् ' इति विशेषैसम्बन्धात्[18] घटादेरेवावभासो[19] न अन्यस्य इति मन्वीथाः, तर्हि[20] आत्मनोऽकर्मत्वात् अनवभासप्रसङ्गः[21] । अथ ' आ-श्रयकर्मणोरेव अवभासकं संवेदनं न अन्यस्य ' इति शङ्केथाः, तर्हि किमिदं कर्मत्वं नाम ? परसमवेतक्रियाफलाश्रयत्वम्, इति चेत्, तर्हि परस्पराश्रयत्वप्रसङ्गः, घटादे[22]-रेव आत्माश्रयसंवित्प्रकाश्यत्वे सिद्धे तस्यैव तन्निमित्तव्यवहाराश्रैयत्वसिद्धिः[23], सिद्धे च[24]

---

१. E: साध्यं इति
२. D: भोगसाधनत्वस्यैव
३. C: यितत्वात्
४. D: प्रत्येकस्यैवात्मनः परेषां
५. D omits अपि च
६. A E drop तथा हि
७. D drops तावत्
८. D omits एव
९. A C D: तथा
१०. E: अन्यसम्बन्धस्य
११. E omits तत्
१२. E: अस्मिन्नेव
१३. D: र्थभास ;
E: सर्वाभावभावप्रसङ्गः
१४. E omits the part bracketed.
१५. A omits this word.
१६. D: घटादेश्च
१७. A omits घट
१८. E: विशेषे सम्बन्धात्
१९. D omits एव
२०. A: तस्यात्म for तर्ह्यात्म
२१. C D: अवभास्य
२२. C: अथादेः
२३. C omits त्व ;
A: प्रसिद्धिः
२४. D: सति तन्निमित्त ;
C: तत्सिद्धौ च संविन्निमित्त

संविन्निमित्तव्यवहाराश्रयत्वे [[१]तत्प्रकाश्यत्वसिद्धिः इति। अथ मनीषा समुन्मिषेत् 'संविन्निमित्तव्यवहाराश्रयत्वमेव] तत्प्रकाश्यत्वम्' इति, तर्हि आत्मनोऽपि कर्मत्व-प्रसङ्गः। अथ 'परसमवेतसंवित्प्रयुक्तव्यवहाराश्रयत्वमेव [२]तत्कर्मत्वम्' इत्युच्येत[३], तर्[४]हापि संवेदनस्य सर्वात्मना[५]र्थसम्बन्धाभावाविशेषे सति एकस्यैव तत्[६]कर्मत्वं किं-निमित्तमिति पर्यनुयोगे कर्मतया तस्य [७]जनकत्वात् तत्कर्मत्वमिति ब्रुवाणस्य आत्मा-श्रयत्वमपरिहार्यं स्यात्। किं च 'संवित्प्रयुक्तव्यवहाराश्रयत्वमेव [८]तद्वेद्यत्वम्' इति वदतः शुक्तिशकलस्य रजतज्ञानवेद्य[९]त्वं अन्यथाख्यातिश्[१०]च प्रसज्येत[११]। ततश्च एकं प्रत्यन्यचेतना[१२]सिद्धिः। तस्मात् अनुभवस्व[१३]भावस्य एकस्यैवात्मनो निखिलार्थसम्बन्धेन[१४] तदवभासकत्वानभ्युप[१५]गमे [१६]सति सकलव्यवहारलोपो दु[१७]र्वारः प्रसज्येत।

[१८]अयमेव न्यायो नैयायिकादीनामपि, तैरपि[१९] मनस्संयुक्तात्मप्रदेशे एव संवि-ज्जन्माभ्युपगमात्। अयमत्र विशेषः 'तेषां संवेदनस्य अस्वयंप्रकाशरू[२०]पत्वात् न संविदाश्र[२१]ययोः अवभाससिद्धिः' इति।

---

१. E omits the part within brackets.

२. E omits तत्

३. C: उच्यते

४. D omits अपि

५. A: सर्वात्मनः सम्बन्ध ; D: सर्वात्मनात्मसम्बन्ध

६. A: त्वमिति पर्यनुयोगे

७. C: तस्य ...त्वमिति ; D: कर्मतया तत्परिहारत आत्माश्रयत्वं दुर्वारं स्यात्।

८. A E omit तत्

९. D: त्वात्

१०. D omits च

११. C adds इति here.

१२. D omits चेतन ; C E add नापि घटादिसिद्धिः

१३. A C omit स्वभाव

१४. E: सम्बन्धतदवभास

१५. A: भासत्वा ; C: अभ्युपगमे

१६. C D omit सति

१७. A: दुर्निवारः ; E: निर्वारः

१८. A E: अत एव

१९. E omits तैरपि

२०. C omits रूप

२१. E: संवित्तदाश्रययोरपि

ये तु प्रमाणफलं[1] प्राकट्याख्यं विषयगतमेव इच्छन्ति तेषां विषयगतत्वात् संवेदनस्य, तेन आत्मनः सम्बन्धाभावात्, आत्मानं प्रति विषयो न प्रकाशेत । 'अस्त्येव विषयात्मनोः कर्मकर्तृसम्बन्धः' इति चेत्, भवतु नाम[2] विषयात्मनोः सम्बन्धः[3]; तथापि तस्मिन्नप्रतिभासमाने तं प्रति कथं विषयोऽवभासेत ? न च विषयगतसंवेदनेन[4] आत्मनो वेद्यत्वं संभवति वैपरीत्येन द्रष्टृ[5]दृश्यभावप्रसङ्गात्। नापि तदैव[6] आत्मविषयं[7] ज्ञानान्तरं भवति, निरवयवद्रव्यस्य युगपत् विरुद्धानेकपरिमाणा[7]नुपपत्तेः । कालान्तरे तु[8] आत्मस्फुरणं व्यवहारानुपयोगि, तदा विषयस्फुरणा[9]भावात् ।

ये[10] पुनः स्वयंप्रकाशमप्यात्मानं अणुपरिमाणं[11] देहपरिमाणं वा कल्पयन्ति, तेषामप्यात्मनो बाह्यार्थ[12]सम्बन्धाभावात् तुल्य एव व्यवहाराभावप्रसङ्गः। तस्मात् सर्वैरपि[13] वादिभिः चित्स्वरूप[14] एवात्मा सर्वार्थसम्बन्धि[15]तया सर्वमर्थ[16]मवभासयन् अशेषव्यवहारहेतुः इत्यनिच्छद्भिरप्या[17]श्रयणीयम् ।

तत्र ये सांख्यादयः 'चित्स्वभावा[18] एवात्मानो बहवः' इति मन्यन्ते, तेषामपि दुरुपपादं व्यवहारमुत्पश्यामः; चित्स्वभावत्वे सति तुल्यस्वभावत्वात् प्रदी-

---

१. C: फले
२. A omits नाम
३. C: संभवः
४. C: विषय ...वेदनेन
५. E omits द्रष्टृ
६. C: विषयज्ञ ...संभवति ;
D: विषयः प्रकाशः परिकल्प्येत, एतस्याः सामग्र्याः फलद्वयजनकत्वानभ्युपगमात्। कालान्तरे etc.,
७. C: परिणामा
८. C: त्वात्मस्फु....बहारानुपयोगि
९. D: स्मरण
१०. D: ये त्वात्मानं अणुपरिमाणं मध्यमपरिमाणं वा कल्पयन्ति
११. C: अणुप....देह etc.,
१२. C omits बाह्य
१३. A C E: एव for अपि
१४. C: चिद्रूप
१५. D: सम्बन्धी and C adds एव
१६. D: सर्वार्थ
१७. D omits अपि
१८. A E: स्वरूपा

पादी[1]नामिव परस्परं आत्मनां अविषयत्वात् एकं प्रत्यन्ये[2]चेतनाः गगनकुसुमकल्पाः[3] एवेति। तस्मात् एकः स्वयंप्रकाशः सर्वशरीरानुगतः अविद्यापरि[4]कल्पितानेकका[5]र्यकरण-संघातभेदात् तदु[6]पाध्यवच्छिन्नः अनेकतया अव[7]भासते। अत एव तज्जननमरणादिभिः तद्वानिव तद्विक्रियादिभिश्च[8] विक्रियावानिव तत्परिच्छेदेनैव[9] परिच्छिन्न इव इति सर्वव्यवहारोपपत्तिः। तदेवं आगमानुमानार्थापत्तिभिः ऐकात्म्य[10]निश्चयः।

यत्पुनरुक्तम् 'प्रत्यक्षेण आत्मभेदमीक्षामहे[11]' इति, तत् नभोभक्षणतुल्य[12]मुत्पश्यामः, आत्मान्तरस्य[13] बाह्येन्द्रियागोचरत्वाभ्युपगमात्। मनसश्च स्वात्मनोऽन्यत्र प्र[14]वृत्त्यनङ्गीकरणात्[15] तत्त्वदर्शनप्र[16]द्वेषितया साक्षिप्रत्यक्षानाश्रयणात्। यः पुनः[17] 'त्वम्, अहम्' इति भेदप्रतिभासः स देहाद्युपाधिगत इति नात्मानं कटाक्षेणापि वीक्षितुं क्षमते।

यच्चेदमुक्तम् '[18]प्रतिवादिशरीरं वादिशरीरगता[19]त्मनो भोगायतनं न भवति, वादिशरीरात् अन्यशरीरत्वात्, गतप्राणशरीरवत्' इति, तत्र हेतुः [20]अप्रयोजकः, दृष्टान्तशरीरस्य प्राणादिसम्बन्धाभावात् अभोगायतनत्वम्, न[21] अन्यशरीरत्वात्, इति।

---

१. C omits आदि
२. C: अपर; D: अन्ये
३. E: कल्पनैषेति
४. C omits परि
५. D: अनेकार्थकरण
६. D: तत्तदुपा
७. A D E: विभाव्यते
८. A E omit दिभिश्च विक्रियावानिव
९. D omits एव
१०. C: कात्म्ये
११. E: ईक्षाम इति
१२. A D omit तुल्य
१३. C: आत्मा तस्य; D: आत्मनो
१४. E: पुनरङ्गी
१५. D: कारात्
१६. A E: विद्वेषितया
१७. D: पुनस्त्वयमहमसाविति
१८. D: वादिशरीरं प्रतिवादिशरीरं
१९. C omits गत; E: शरीरादात्मनो
२०. D: सन्दिग्धप्रयोजकः
२१. D: जन्यशरीरत्वात् वा इति

यदप्यनुमानो[1]न्तरमुद्भावितम् ‘ स्वसंख्यासंख्येयात्मभिः आत्मवन्ति शरीराणि, शरीरत्वात्, प्रतिवादिशरीरवत् ’ इति, तत्रापि ‘शरीरत्वात्’ [2]इत्ययं हेतुः स्वसंख्यासंख्येयात्मभिः आत्मवत्त्व[3]मिव शरीराणां प्रतिवाद्यात्मनैव आत्म[4]वत्त्वम[5]पि साधयति इति प्रकरणसमः; ऐकात्म्यश्रुतिविरोधा[6]त् कालात्ययापदिष्टश्च[7]। ननु—‘ शरीरत्वात् ’ इत्यस्य हेतोः ऐकात्म्यसाधनेऽपि समानं प्रकरणसमत्वम्—इति चेत्, न; “ एको देवः सर्वभूतेषु गूढः ” (Śvet., VI, 11) इत्यादिश्रुतिविरोधे स[8]ति अनुमानस्य ऐकात्म्यप्रतिक्षेप[9]प्रवृत्त्यसंभवात्।

यदपीदमवादि ‘ देवतिर्यङ्मनुष्यादिशरीरगतसुखदुःखादीनि[10] भिन्ना[11]श्रयाणि, विरुद्धानेकधर्मत्वात् ’ इति, तत्र किं अनेकाश्रयत्वमात्रं साध्यते? किं वा अनेकात्मा[12]श्रयत्वम्? इति। आद्ये[13] कल्पे[14] सिद्धसाधनम्, अन्तःकरणानां अनेकत्वात्, तदाश्रयत्वाभ्युपगमाच्च सुखदुःखादीनाम् इति। उत्तरस्मिन् साध्यविकलो दृष्टान्तः, क्वचिदपि अनेकात्माश्रयधर्मासिद्धेः।

यदप्येतदुत्प्रेक्षितम् ‘ ऐकात्म्ये स[15]ति स[16]र्वत्रानुसन्धानप्रसङ्गात् तस्य[17] चाभावात् भोग[18]व्यवस्था अनुपपद्यमाना आत्मभेदं कल्पयति ’ इति, तत्रापि विकल्पनीयम् ‘ किं आत्मस्वरूपस्य स[19]र्वत्र अनुसन्धानेन भवितव्यमित्युच्य[20]ते? किं वा भोक्तृणाम्?’

---

१. A E: अनुमानं
२. D omits इति
३. D: आत्मत्व
४. D: आत्मत्व
५. C omits अपि
६. D: विरोधे
७. D: दिष्टत्वाच्च
८. D: सत्यैकात्म्य
९. D E: प्रतिपक्षे
१०. D omits आदि
११. A E: विभिन्ना
१२. D: अनैकात्म्याश्रय
१३. A E: पक्षे
१४. D adds हि
१५. A E omit सति
१६. A E: सर्वानु
१७. D omits तस्य चाभावात्
१८. D: भोग्य
१९. A: सर्वाट्
२०. D: उच्यमाने

इति। तत्राद्ये कल्पे[1] भवत्येव सर्वत्र[2] साक्षितया आत्मस्वरूपस्य[3] अनुसन्धानम्, सर्वार्थानु[4]-सन्धानसमर्थं[5][6] साक्षिणमन्तरेण व्यवहारानुपपत्तेः[7]। अथोत्तरः कल्पः, तदा आत्मस्वरूपस्यैकत्वेऽपि अन्तःकरणानां अनेकत्वेन तदवच्छिन्नरूपाणामपि अनेकत्वात् अननुसन्धानोपपत्तिः[8], यथैवं[9] आकाशात्मना आकाशस्यैकत्वेऽपि[10] घटशरावादि[11]रूपेण असङ्कर-भोग्यव्यवहारविषयत्वम्[12], इति। तस्मात् भोग्यभोगव्यवस्था[13] अन्तःकरणभेदेनैव उपपन्ना, न[14] आत्मभेदेन।

या चैषा आत्मबहुत्वश्रुतिरुपन्यस्ता "सर्वं एते आत्मानो व्युच्चरन्ति" (Maitri., VI, 32) इति, सापि भ्रान्तिसिद्धभेदोपमर्देन ऐकात्म्यप्रतिपादनायैव भेदमनुवदति इति न भेदं साधयति। अत एव औपाधिकरूपाणां[15] अनेकत्वात् तेषु च[16] संसारप्रतिभासात्[17] अनेकनियोज्यसिद्धेः[18][19] अनेकफलोद्देशेन बहुसाधनविधानोपपत्तिः[20] इति[21] न श्रुतार्थापत्तिविरोधः। तस्मात् आत्मभेदे प्रमाणाभावात् अयुक्तत्वाच्च[22] सर्वेषु शरीरेषु एक एवात्मा[23] इति सिद्धम्।

इति तत्त्वशुद्धौ ऐकात्म्यनिरूपणप्रकरणम्।



---

१. A E: पक्षे
२. A E: सर्वसाक्षितया
३. D omits आत्म
४. D: सर्वाधा
५. C: सन्धानेन
६. C D: समर्थसाक्षिणं
७. D: पत्तिः
८. D: नापत्तिः; E: नानुपपत्तिः
९. C D E: यथा वा
१०. C omits अपि
११. D: कलशादि
१२. A: विषयमिति
१३. C D: भोगव्यवस्थानुपपत्तिः
१४. D: नात्मभेदं कल्पयति
१५. A E: एव च औपाधिक
१६. D omits च
१७. A: संस्कार
१८. A: सिद्धनियोज्य for अनेकनियोज्य
१९. C: प्रसिद्धेः
२०. E: साधनोपपत्तिरिति
२१. C: पपत्तेः। न, omitting इति
२२. D omits च
२३. C: आत्मा सिद्धः

## ॥ आत्मनः सुखस्वभावत्वनिरूपणं सप्तत्रिंशम् ॥

संसारकाननपरिभ्रमणश्रमा[1] यं विद्याध्वना सुखमहार्णवमात्मभूतम् ।
लब्ध्वा[2] भवन्ति गतसंसृतिपाशबन्धाः[3] तं देवकीतनयमेमि मुदा सदाहम् ॥

सम्प्रति विचार्यते[4] 'किमात्मा सुखस्वभावः किं वा तद्गुणकः[5]?' इति। इह खलु केचित् अनाद्यहङ्काराध्यासवासितान्तःकरणाः यथाप्रतिभासमेव सुखमात्मनो गुण इति कल्पयन्ति; प्रमाणं च तत्र व्यवहारमात्रानुसारेण[6] प्रत्यक्षादि वर्णयन्ति। तथा हि[7]। 'अहं सुखी' इति सम्बन्धावगमात् सुखात्मनोः भेदं प्रत्यक्षमुत्पश्यामः[8]। न ह्येकस्मिन्नेव सम्बन्धावभासः[9] संभवति। न चास्ति[10] 'सुखमहं' इति कदाचित्[11] प्रतीतिः। नापि सुखात्मनोः अभेदे प्रमाणमस्ति[12], येन 'अहं सुखी' इति प्रतिभासस्य भ्रान्तित्वमाशङ्क्येत[13]। अपि च सुखं आत्मस्वरूपं चेत्[14] सर्वदैवानुभूयेत[15]। न चोपलभ्यते[16]। ततश्च तस्य[17] तस्मादन्यत्वमवगच्छामः। तदिदं[18] प्रयोगः 'विवादाध्यासितं सुखं आत्मस्वरूपं न भवति, तस्मिन्नुपलभ्यमाने सत्यनुपलभ्यमानत्वात्, यो यस्मिन्नुपलभ्यमाने सति नोपलभ्यते स तस्मादन्यो दृष्टः यथा उपलभ्यमानात् गन्धात्

---

१. A C: श्रमोऽयं ;
D: श्रमाय ;
E: श्रमायां

२. A E: बद्धा

३. D: बन्धात्

४. C omits सम्प्रति विचार्यते

५. C D: तद्गुणः

६. D: व्यवस्था

७. A: च for हि ;
E: तथा चाह and omits अहं

८. C omits प्रत्यक्षं

९. D: अवगमः

१०. D omits च

११. D: तदाचित्

१२. D: प्रमाणान्तर

१३. D: आशङ्केत

१४. D: च for चेत्

१५. A E: सदैव ;
D: तथैव

१६. D: न च प्रकाश्यते

१७. A omits तस्य ;
E: ततश्च for तस्य

१८. D: तथा चायं

अनुपलभ्यमानो रसः, तथा चेदं प्रकृतम्, तस्मात् तथा' इति। साध्यं च[1] सुखं प्रतीयते; आत्मा पुनः अनादिसिद्धः; तत्र कथं तयोः एकत्वमवकल्पते? अपि च सुखस्य आत्मस्वरूपत्वे तदर्थः पुरुषप्रयत्नोऽनर्थकः स्यात्, आत्म[2]स्वरूपस्य सर्वदा[3] सिद्धत्वात्। सुखार्थमेव च[4] सर्वो जन्तुरनवरतं प्रदीप्तशिरा[5] इव भ्रम्यमाणो[6] दृश्यते। अपि[7] च सुखस्यात्मस्वरूपत्वे[8] तत्साधनविधायि शास्त्रं अनर्थकं स्यात्; ततश्च तस्य प्रामाण्यं बाध्येत। तस्मात् आत्मनोऽन्यदेव सुखं युक्तम्[9]। तच्च[10] गुणत्वे सति सामान्यवत्तया[11] एकेन्द्रियग्राह्यत्वात् आत्मन्येवोपलभ्यमानत्वात्[12] आत्मनो[13] विशेषगुणः इति तार्किकाः मीमांसकाश्च मन्यन्ते[14]।

तान् प्रति ब्रूमः। "आत्मैवानन्दः", "आनन्द आत्मा" (Taitt., II, v, 1) "यो वै भूमा तत्सुखम्" (Chānd., VII, xxiii, 1) इत्यादिश्रुतिसमर्पितं आत्मनः सुखस्वभावत्वं[15] न अविद्याध्यासपरिकल्पितभेदप्रतिभासमात्रेण अपनेतुं शक्यते। न च वाच्यम् '"आनन्द आत्मा" इति[16] सामानाधिकरण्यं[17] "नीलोत्पलम्[18]" इत्यादिवत् गुणगुणित्वनिबन्धनम्' इति; सुखात्मनोः गुणगुणित्वे प्रमाणाभावात्। न च इदमेव वाक्यं प्रमाणम्, लोके अनेकधा[19] सामानाधिकरण्य-

१. D omits च
२. A D omit आत्म
३. A corrects this into नित्य
४. A D E omit च
५. C: पर्याप्तशिरा
६. D: भ्रममाणो
७. D omits अपि च
८. A C: आत्मत्वे
९. D: सुखमुक्तं; E omits युक्तम्.
१०. D: तस्य for तच्च
११. D: वत् तथैकेन्द्रिय
१२. A E add च
१३. C: आत्मविशेष
१४. E: प्रतिपन्नाः for मन्यन्ते
१५. D: सुखस्वभावोऽपि लभ्यमानत्वात् त्वं नामाविद्यापरिनिष्पन्नभेद
१६. A E: इत्यादि
१७. A E: करण्यात्
१८. A E: नीलोत्पलादिवत्; D: नीलमुत्पलम्
१९. A: अनेकसामानाधि

दर्शनात्। [1]स्वतस्तु वस्त्वेकत्वनिबन्धनमेव युक्तं सा[2]मानाधिकरण्यम्, तत्रैव तस्य मुख्यत्वा[3]त्। भिन्नप्रवृत्तिनिमित्तशब्दा[4]नां एकस्मिन् अर्थे वृत्तिर्हि[5] सामानाधिकरण्यम्। गुणगुण्यादिषु सम्बन्धविशेषावगमपूर्वकत्वाच्च[6] तद्विष[7]यत्वनिश्चयस्य। तत[8]श्च सुखात्मनोः सम्बन्धविशेषानवगमात् "आनन्द आत्मा" (Taitt., II, v, 1) इत्यादिसामानाधिकर[9]ण्यं एकत्वनिबन्धनमेव इति निश्चिनु[10]मः। 'अहं सुखी' इति[11] प्रतिभासस्य [12]परिच्छेदावभासत्वा[13]त् घटाकाशादिप्रतिभासवत् अध्यासरूपता सुप्रसिद्धा। ननु सुखात्मनोः भेदे प्रमाणमुक्त[14]म् 'तस्मिन्नुपलभ्यमानेऽपि अनुपलभ्यमानत्वात्' इति। तद[15]सत्, हेतोः अनैकान्तिकत्वात्, प्रतिबिम्बादिषु[16] मुखादिगतरूपे अवभासमानेऽपि [17]तदभिन्नस्यावे[18]दातताधर्मस्य अनवभासमानत्वात्। न च तस्य[19] स्वरूपात् अन्यत्वं संभवति, रूप[20]हीनत्वे सति चाक्षुषद्रव्यत्वानुपपत्तेः। नापि गुणान्तरम्, [21]चक्षुरेकेन्द्रियग्राह्यत्वात्। नापि रूपत्वसामा[22]न्यम्, मसृणरूपेऽननु[23]वृत्तेः। नापि रूपान्तरम्, अवान्तरजातीयस्य गुणद्वयस्य युगपदेकस्मिन् द्रव्ये समवायानुप[24]पत्तेः। नापि रूपस्यैव धर्मविशेषः, तस्य द्रव्यादिषु [25]अनन्तर्भावे सति गगनकुसुमवत् प्रति-

---

१. D: अत्र भुवस्त्वेकत्र
२. D omits this word.
३. D: मुख्यत्वभिन्न
४. D: निमित्तानेकस्मिन्
५. A E drop हि
६. C D omit च
७. A E: तद्विषयस्य ; D omits त्व
८. D drops ततश्च
९. E: करणे तत्रैव तस्य मुख्यत्वमेकत्वनि ... सनमेवेति
१०. C: निश्चितम्
११. A E: इत्यादि
१२. C D add अपरिच्छिन्न
१३. A E: कत्वात्
१४. C: अस्ति for उक्तम्
१५. D omits तदसत्
१६. C E add मुखादिषु
१७. D: तद्भिन्न
१८. A C E add अपि
१९. A: ततः स्वरूपान्यत्वं
२०. C: स्वरूपभिन्नत्वे
२१. D: चक्षुरिन्द्रिय
२२. D omits त्व
२३. C E: अनुपपत्तेः
२४. D: वायासंभवात्
२५. D: न तदभावे

भासानुपपत्तेः, अन्तर्भावे च[1] उक्तेन न्यायेन रूपा[2]दन्यत्वासंभवात्। तस्मात् अवदातताधर्मस्य रूपात्[3] अभेदेऽपि उपाधि[4]वशादेव रूपोपलंभेऽपि अनुपलंभ[5]वत् सुखस्य आत्मस्वरूप[6]त्वेऽपि अन्तःकरणाद्युपाधिसामर्थ्यात् आत्मोपलंभो न विरुध्यते। अत एव आत्मनोऽनादिसिद्धत्वेऽपि [[7]सुखरूपस्य अनव[8]भासनात् साध्यतावभासोऽपि[9] जाघट्यते। तत[10]श्च सुखार्थोऽपि पुरुषप्रयत्नः तदभिव्यञ्जकत्वेन अर्थवानेव, तस्य नित्य[11]सिद्धत्वेऽपि] उपाधिमलेन[12] अनभिव्यक्तत्वात्। पुरुषप्र[13]यत्नेन उपाधिनैर्मल्यापादने सति तदभिव्यक्तौ तदुत्पत्तिवि[14]भ्रमो लोकस्य। ततश्च य[15]दुक्तम् 'सुखस्य नित्यत्वे तत्साधनविधायिशास्त्रस्य आनर्थक्यात् अप्रामाण्यम्' इति, तदपि सुखस्य आत्मस्वभावतया नित्यत्वेऽपि तदभिव्यक्तिसाधनविधानेन शास्त्रस्य प्रामाण्योपपत्तेः न दोषमावहति।

अपि च अनुमानेनापि सुखस्वभावत्वं आत्मनो जानीमः। तथा हि। 'विवादास्पदीभूत आत्मा सुखस्वभावो भवितु[16]मर्हति, निरुपाधिकप्रेमास्पदत्वात्, उभयवादिसंप्रतिपन्नसुख[17]वत्' इति। न चात्मनः प्रेमास्पदत्वमसिद्धम्, [[18]'मा न भूवं भूयासम्' इति आत्मविषयाशिषो दृश्यमानत्वात्। न ह्यप्रियं उपेक्ष[19]णीयं वा आशास्यमानं

---

१. C omits च
२. D: रूपाद्यन्य
३. A: रूपाद्यभेदे
४. A: उपाधिभेदवशादेव ; D: उपाधिदवगाहदेव ; E: उपाधिबलवशादेव
५. E: अनुपलंभात्
६. C: स्वभावत्वे
७. A drops the part bracketed.
८. D: भासमानत्वात्
९. D omits अपि
१०. E: अतश्च
११. E: तस्यानन्यत्वे सिद्धेऽपि
१२. A: मले तामिरनभि ; C: अभिव्यक्त
१३. A: प्रयत्नात्
१४. D drops वि
१५. A E: युक्तम् for यदुक्तम्
१६. C omits भवितुमर्हति
१७. C: सुखस्वभाववत्
१८. A E omit the portion within brackets.
१९. D: उपेक्ष्यं

दृश्यते। अपि च 'आत्मा प्रेमास्पदं भवितुमर्हति,[१] स्वार्थमुपादीयमानसाधनत्वात्, संप्रतिपन्नसुखवत्' इति[२]। श्रुतिश्च[३] आत्मनः प्रेमास्पदत्वमाह "तदेतत् प्रेयः पुत्रात् प्रेयोऽन्यस्मात् सर्वात् यदयमात्मा" (Bṛh., I, iv, 8) इति। ननु निरुपाधिकप्रेमास्पदत्वमसिद्धम् ], आत्मनोऽपि सुखार्थत्वात्। नैतत्सारम्, सुखमेव हि[४] पुरुषार्थः, नात्मा[५] सुखार्थः। अन्यथा सुखस्य[६] अपुरुषार्थत्वे[७] तदर्थं[८] पुरुषप्रयत्नो न भवेत्। तस्मात् सुखतत्साधनान्येव पुरुषार्थानि[९], नात्मा पुनर[१०]न्यार्थः। तदेवम् 'निरुपाधिकप्रेमास्पदत्वात्[११]' इति नायमसिद्धो हेतुः। दुःखनिवृत्तेरपि पुरुषार्थत्वात्[१२] न अनैकान्तिकता। 'भावत्वे सति' इति वा विशेष्यते[१३]। न च वाच्यम् 'सुखस्य अन्यार्थत्वे सति[१४] निरुपाधिके[१५]प्रेमास्पदत्वाभावात् साधनविकलो दृष्टान्तः' इति; तस्यापि परमार्थतः अन्यार्थत्वाभावात्, अध्यासनिबन्धनत्वात् अन्यार्थत्व[१६]प्रतिभासस्य। तथा हि, स्वरूपभूतस्यैव सुखस्य यन्निमित्तः पृथक्त्व[१७]विभासः तन्निमित्त एव तस्य[१८] अन्यार्थत्वावभासोऽपि इति[१९]। न चैतावता[२०] दृष्टान्ताभावोऽपि शङ्कनीयः; उपाधिवशादेव सुखात्मनोः प्रातिभासिकभेदस्य विद्यमानत्वात्, प्रतिवादि[२१]संप्रतिपन्नत्वाच्च[२२] भेदस्य। तस्मात् अनुमानेनापि[२३] आत्मनः सुखस्वभावत्व[२४]सिद्धिः।

---

१. C omits भवितुमर्हति
२. D omits इति
३. C: श्रुतिश्चोक्तम्
४. D drops हि
५. A E omit नात्मा सुखार्थः
६. C: सुखस्य तत्साधनस्य च अपुरुषार्थत्वात्
७. A E both have a difft. text here: र्थत्वे ततः बिम्बप्रतिबिम्बयोः etc. This portion belongs to the following chapter.
८. A omits तदर्थं; D: तदर्थः
९. A D: पुरुषार्थः
१०. C D E: नात्मा पुरुषार्थः
११. D: त्वमिति
१२. D: सुखार्थत्वात्
१३. C: विशिष्यते
१४. C omits सति
१५. D: धिके प्रेमाश्रयत्वा
१६. D omits त्व
१७. D omits त्व; A: पृथक्त्वाभासः
१८. D: तस्या नार्थावभासो
१९. E omits इति
२०. E: न च तावता
२१. A C: परवादि
२२. C omits च
२३. D: अबुध्यमानेनापि
२४. D drops त्व

अपि च 'सुखमहमस्वाप्सम्' इति सु[1]प्तोत्थितस्य स्वापसुखा[2]नुभवपरामर्श-द[3]र्शनात् स्वा[4]पे स्वरूप[5]भूतमेव सुखं अनुभूतमिति गम्यते। न चायं दुःखाभावविषयः सुखपराम[6]र्शः, स्वापसम[7]ये धर्मिग्रहणा[8]भावे सति अभावानुभवा[9]संभवात्। परिशेषात् विषयसुखानुभवा[10]संभवे सति स्वापसमये स्वरूपभूत[11]स्यैव स्वयंप्रकाशत्वेन अनुभवः समाश्रयणीयः। ततश्च स्वा[12]पे प्रत्यक्षमेवात्मनः सुखस्वरूपत्वम्। किं च "स एको मानुष आनन्दः" (Taitt., II, viii, 9) इत्युपक्रम्य "स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाकामहतस्य" (Taitt., II, viii, 39, 40) इत्यन्तेन विदुषः सुखसाधनाभावेऽपि [13]बुद्धितारतम्यनिमित्तसुखतारतम्यस्य[14] प्रतिपादनात् स्वरूप-भूतस्यैव सुखस्य प्रतिबन्ध[15]निवृत्तिमात्रमेव साधनैः क्रियते, न उत्पादन[16]मित्य[17]ध्यवस्यामः। तस्मात् प्रत्यक्षानुमानागमार्थापत्तिभिः 'आत्मा[18] सुखस्व[19]भावः' इति सिद्धम्।

इति तत्त्वशुद्धौ आत्मनः सुखस्वभावत्वनिरूपणप्रकरणम्।



---

१. E: सुषुप्तोत्थितस्य
२. C omits अनुभव
३. E: परामर्शनात्
४. A C: स्वापस्वरूपमेव ; E omits स्वापे
५. E: स्वरूपमेव
६. C: सुखावमर्शः
७. D: समयधर्मि
८. C: ग्रहणाप्रभवि सति
९. E: अनुभवात्
१०. A D: भवत्वासंभवे
११. A E: स्वरूपसुखस्यैव
१२. C E: स्वापप्रत्यक्ष
१३. C E: शुद्ध
१४. A: तम्यप्रतिपादनात्
१५. A C: बन्धतिरोधानमेव
१६. D: नोत्पाद्यत्वं
१७. A omits इति
१८. A E omit आत्मा
१९. D: सुखरूपः

## ॥ जीवब्रह्मैकत्वनिरूपणं अष्टात्रिंशः ॥

दृष्ट्वा[1] लोकं परमकृपया दुःखितं[2] सादरं यत्
प्रत्यक्त्वेन[3] श्रुतिविनतया दर्शितं ब्रह्म शुद्धम्[4] ।
कण्ठे[5] कार्तस्वरमिव परं भूषणं लौकिकैस्तं[6]
विष्णुं वन्दे परमपुरुषं हृत्सरोजे सदैव[7] ॥

संप्रति[8] विचार्यते ‘किं ब्रह्मणोऽन्यो जीवः, किं वा ब्रह्मैव?’ इति। इह खलु[9] केचिदाचक्षते[10]—विवादाध्यासितौ[11] जीवपरमेश्वरौ परस्परं[12] भिन्नौ भवितुमर्हतः[13], विरुद्धस्वभावत्वात्, तमःप्रकाशवत्[14]। तथा हि। जीवो नाम कार्यकरण[15]संघाताभिमानी धर्माधर्मवान् परिच्छिन्नज्ञानशक्तिः अत्यन्त[16]पराधीनः, ईश्वरः पुनः अकार्यकरणो[17] धर्मादिरहितो निरतिशयज्ञानशक्तिसंपन्नः अपरतन्त्रः[18]। ततश्च[19] विरुद्धस्वभावयोः कथमपि न अभेदो भवितुं युक्तः। [20]न च बिम्बप्रतिबिम्बयोः घटाकाशमहाकाशयोरिव उपाधितो विरुद्धस्वभावतया भेदावभासेऽपि “तत्त्वमसि” (Chānd., VI, viii, 7)

---

१. E: दृष्टो
२. D: दुःखितं यत्प्रयुक्ते किं जीवेन श्रुति etc.
३. C: प्रत्युत्तवेन
४. C: गूढम् ; D: ब्रह्मतन्त्रम्
५. D: गाढेकार्तस्वरमिव वरं
६. E: लौकिकं तं
७. A E: सदैवम्
८. C omits संप्रति विचार्यते
९. C: किल for खलु
१०. C: भेदविद आचक्षते
११. C omits विवादाध्यासितौ
१२. All except C give परस्परभिन्नौ
१३. C omits भवितुमर्हतः
१४. A E: प्रकाशाप्रकाशवत्
१५. C: कारण ; D: कार्यकारणताभिमानी
१६. D omits अत्यन्त
१७. C: कारणो ; D: कारणधर्मादिरहितो
१८. A E: अपराधीनः
१९. D: ततस्त्वविरुद्ध
२०. A E omit the portion within brackets here and insert it in the earlier chapter.

इत्येकत्वशास्त्रात् जीवपरयोः[1] परमार्थतः एकत्वमेव इति[2] युक्तम्, ब्रह्मणि प्रति-[3] बिम्बावच्छेदयोः असंभवात्। तथा हि। मूर्तद्रव्यस्य मूर्तान्तरे स्वच्छद्रव्ये प्रतिबिम्बभावो दृष्टः। ब्रह्मणः[4] पुनः अमूर्तत्वात् सर्वगतत्वात् अद्वितीयत्वाच्च न दर्पणादिस्थानीयं किञ्चित् द्रव्यमस्ति। न च अविद्यायां अस्य प्रतिबिम्बमस्ति,[5] अवस्तुत्वात् अविद्यायाः। ब्रह्मणश्च नैतरां[6] प्रतिबिम्बसंभवः,[7] सर्वगतत्वात्। न च 'आकाशस्य इव जलादौ, ब्रह्मणः सर्वगतस्यापि प्रतिबिम्बं[8] युज्यते' इति वाच्यम्, तस्याप्यसिद्धत्वात्[9]। साभ्रनक्षत्राकाशस्य[10] जले प्रतिबिम्बं[11] दृश्यते; इति चेत्, न, जलादौ[12] अन्तराकाशेन सह अभ्रनक्षत्रादीनामेव प्रतिबिम्बावभासनात्। अथ कथञ्चित् जानुमात्रजले[13] दूरविशालाकाशदर्शनात् आकाशस्य प्रतिबिम्बसंभवः, तथापि न तत् ब्रह्मणो[14] युज्यते, जलादिवत् स्वच्छपरिच्छिन्नद्रव्यान्तराभावात्[15]। न च केनचित् ब्रह्मणोऽवच्छेदः [संभवति,[16] अद्वितीयत्वात्। नाप्यज्ञानेन अवच्छेदः] तस्य[17] ज्ञानाभावमात्रत्वात्। अन्तःकरणेन अवच्छेदो दुःसंपादः, आकाशेनेव[18] घटस्य ब्रह्मणो[19] तस्य सम्बन्धाभावात्, ब्रह्मणोऽसङ्गत्वात्, संसारोपाधित्वाच्च[20][21] अन्तःकरणस्य। ततश्च ब्रह्मणो द्रव्यान्तरमेव जीवः। एवं च "अयमात्मा ब्रह्म" (Bṛh., II, v, 19) "तत्त्वमसि"

---

१. D: जीवस्य परमेश्वरयोः
२. A omits इति
३. C E add बिम्ब ;
   D: ब्रह्मणि चरति बिम्बावच्छेदयोः
४. A D: ब्रह्म पुनरमूर्त
५. D: बिम्बत्वमस्ति
६. D: नितरां
७. A: भावः ;
   D: असंभवः
८. C: बिम्बनं ;
   D: बिम्बता
९. D adds च
१०. D: साभ्रनभोरूपस्याकाशस्य
११. D: बिम्बता
१२. A: जलान्तराकाशेन ;
   D: जलान्ताकाशेन
१३. A: ज्ञानमात्र ;
   D: जानुजले
१४. C: ब्रह्मणि
१५. D: वस्त्वन्तराभावात्
१६. D omits the part bracketed
१७. D: अज्ञानस्य
१८. D: आकाशस्येव पटेन
१९. D: ब्रह्मणस्तेन
२०. C: संसार्यु
२१. D omits च

(Chānd., VI, viii, 7) इत्यादि[१]श्रुतयो जीवब्रह्मणोः[२] भिन्नयोरेव[३] एकत्वोपासनार्था[४] भविष्यन्ति[५]। तथा एकत्वप्रतिपादकाः श्रुतयो भेदापवादाश्च[६] जीवब्रह्मणोः एकत्वोपासनविधिशेषभूतार्थवाद[७]त्वेन सम्बध्यन्ते[८]। विधीयमानादेव ब्रह्मोपासनात्[९] संसारोपरमलक्षणो मोक्षोऽपि सिध्यति[१०] इति सर्वमुपपन्नम्। ततश्च जीवब्रह्मणोः भेद एव युक्तः[११]— इति।

अन्ये तु[१२] भेदप्रतीतिबलात्[१३] भेदाभेदविषयश्रुतिबलाच्च जीवब्रह्मणोः[१४] कार्यकारणयोरिव भेदाभेदौ कल्पयन्ति। अपरे तु तत एव हेतोः स्वतो[१५] जीवस्य[१६] ब्रह्मत्वेऽपि उपाधितो भावान्तरमस्ति, ततः संसारावस्थायां ब्रह्मणो भिन्नाभिन्नो जीवः, मोक्षावस्थायां अद्वितीयं ब्रह्मैव, इति कल्पयन्ति।

तत्र[१७] प्रतिविधीयते। न तावत् ब्रह्मणोऽन्यत्वं जीवस्य प्रमाणेनावगन्तुं शक्यते, प्रमाणागोचरत्वात् तयोः। तथा हि। तयोः चिद्रूपत्वे स्वरूपभेदानवगमात् प्रमाणागोचरत्वाच्च न तद्भेदः प्रमाणगम्यः[१८]। द्वयोरप्यचिद्रूपत्वे सति आकाशादिवत् अनात्मत्वात् अनीश्वरत्वप्रसङ्गात्[१९] अत्यन्तशुद्ध आत्मा निर्भेदोऽभ्युपेयः। एकस्यैव स्वयंप्रकाशत्वेऽपि इतरस्य तस्मात् भेदो ग्रहीतुमशक्यः[२०]। न ह्येकस्य गोचरस्यापि अगोच-

१. C: इत्यादयो ;
D omits आदि
२. A D omit जीवब्रह्मणोः
३. D omits एव
४. A: विधानार्था
५. D: भवन्ति
६. C: भेदोप
७. D: शेषार्थतार्थवाद
८. C D: सम्बध्यते
९. C: मानब्रह्मोपासनात्
१०. C: संभवति
११. C: भिन्नः
१२. D omits तु
१३. D: बलादेवाभेदश्रुतिबलाभाच्च
१४. A C E: परयोः
१५. D: ततो जीवब्रह्मणोरैक्ये ब्रह्मण्युपाधितो
१६. C: जीवत्वेऽपि उपाधितो
१७. A: अत्र
१८. D: गम्यम्
१९. D adds च and reads: ततश्च शुद्धज्ञानात्मनि भेदोऽभ्युपेयः।
२०. A: शक्यः ;
D omits अशक्यः

रात् भेदग्रहणं संभवति, अक्ष्णा रूपस्य शब्दात्[1] भेदग्रहणादर्शनात्। तस्मात् न अनयोः भेदः प्रमाणग्राह्यः। न च[2] पुरुषान्तरसंवेदनवत्[3] स्वयंप्रकाशयोरपि अनुमा-[4]नादिवेद्यत्वं संभवति, सोपाधिकसंवेदनस्यैव तत्रानुमानादिगम्यत्वात्। निरुपाधिक-चैतन्ययोस्तु जीवप[5]रमात्मनोः न केनापि प्रमाणेन [[6]ग्रहणं भवति। अथ जीवः सो[7]पाधिकोऽभ्युपगम्येत, तर्हि तस्य जीवभावोऽपरमार्थः, परमार्थस्[8]तु निरुपा[9]धिकं ब्रह्मैव इत्यापद्येत। तस्मात् जीवब्रह्मणोः भेदावभासो बिम्ब]-प्रतिबिम्बयोरिव मायाविजृम्भितः[10]।

तत्र[11] यदुक्तम्, 'ब्रह्मणोऽमूर्तत्वात् वस्त्वन्तराभावाच्च प्रतिबिम्बे[12]नं न संभवति' इति, तदेतदसांप्रतम्, अमूर्तस्याप्याकाशस्य जले प्रतिबिम्बित[13]त्वस्य दर्शितत्वात्। न च वस्त्वन्तराभा[14]वः; परमा[15]र्थवस्त्वन्त[16]राभावेऽपि अविद्यातत्कार्याणां अभावविलक्षणत्वेन अभ्युपगमात्। न च अस्वच्छत्वादविद्यायाः तत्र प्रतिबिम्बाभावः शङ्कनीयः, अस्व-च्छत्व[17]स्य असिद्धत्वात्। तथा हि। किं अचेतनत्वं अस्व[18]च्छत्वम्? किं वा चैतन्याव[19]-भासायोग्य[20]त्वम्? [[21]यद्यचेतनत्वम्, तर्हि दर्पणादावपि तत्प्रसङ्गः। चैतन्यावभासा-योग्य[22]त्वं] चेत्, त[23]दसिद्धम्। तस्मात् अविद्याप्रतिबिम्बितं ब्रह्म [24]अनवच्छिन्नत्वात्[25]

---

१. D: शब्दादेः
२. A omits च
३. D omits वत्
४. D drops आदि
५. A: परात्मनोः
६. D omits the part bracketed.
७. C omits सो
८. A D: परमार्थतस्तु
९. A: धिको
१०. D: तम्
११. D omits तत्र
१२. A: प्रतिबिम्बं न; D: प्रतिबिम्बभावो
१३. C: बिम्बस्य; D E: बिम्बत्वस्य
१४. E: भावः for अभावः
१५. D: परमार्थतो
१६. C: वस्तुत्वाभावेऽपि
१७. E: अस्वच्छस्य सिद्धत्वात्
१८. E omits this word.
१९. D: आभास
२०. A D E: योग्यत्वं
२१. D omits the part bracketed.
२२. A D E: योग्यत्वं
२३. C: तदपि; D omits तत्
२४. A D: अनवि
२५. C: च्छिन्नमीश्वर

ईश्वर इति गम्यते[1]। अन्तःकरणप्रतिबिम्बितं ब्रह्मचैतन्यं जीवशब्दवाच्यं भवति। तयोश्च जीवपरमेश्वरयोः तत्त्वंपदवाच्ययोः अवच्छिन्नानवच्छिन्न[2]रूपेण[3] विरुद्धस्वभावयोरपि एकत्वोपदेशेन तदुभयानुगतप्रत्यगद्वितीयचैतन्यमात्रं लक्ष्यते[4]। ततश्च संसारमूलाविद्यानिवृत्तिः इति सर्वमुपपद्यते[5]। अथ वा घटाकाशमहाकाश[6]योरिव जीवब्रह्मणोः भेदाभेदप्रतीतिः[7] अवकल्पते।

यत्पुनरुक्तम् 'ब्रह्मणो वस्त्वन्तराभावात्, अज्ञानस्य च[8] ज्ञानाभावमात्रत्वात्, अन्तःकरणस्य च[9] संसारहेतुतया ब्रह्मसम्बन्धाभावात् अवच्छेदानुपपत्तिः[10]' इति, तदसत्; संसारकारणभूतस्य मायाशब्द[11]वाच्यस्य अज्ञानस्य[12] अभावविलक्षणत्वात्। न हि भावरूपस्य दृश्यप्रपञ्चस्य प्रकृतिः अभावमात्रं[13] भवितुमर्हति, मृदादिष्वदर्शनात्। "मायां तु प्रकृतिं विद्यात्" (Śvet., IV, 10) इति हि[14] श्रुतिः। ततश्च मायायाः अभावविलक्षणत्वात् तदवच्छेद उपपद्यते ब्रह्मणः। अन्तःकरणानामपि मायाकार्यत्वात् तद्द्वारेण ब्रह्मसम्बन्धात् ब्रह्मचैतन्यस्य[15] अवच्छेद[16]कत्वमवकल्पते[17]। ततश्च[18] तत्र[19] मायावच्छेदे परमेश्वरत्वव्यवहारः, अन्तःकरणावच्छेदे जीवत्वव्यवहारः इति। तयोश्च[20] वास्तवमेकत्वं शास्त्रप्रतिपाद्यमिति सर्वमविरुद्धम्। तदेवं तत्त्वमस्यादिशास्त्रस्य ऐकात्म्यवस्तुमात्रपरत्वात् न विधिगन्धेनापि सम्बन्धः। ततश्च एकत्वप्रति-

---

१. A: गीयते
२. D: अविच्छिन्नावच्छिन्न
३. A: स्वरूप for रूपेण
४. D: लभ्यते
५. D omits सर्वमुपपद्यते
६. D: मठाकाश
७. D: भेदप्रतीतिः
८. D omits च
९. A D omit च
१०. D: अवच्छेदोऽनुपपन्नः; E omits अवच्छेद
११. C: शब्दादि
१२. C omits this word.
१३. A D: अवभासमात्रं
१४. C D omit हि
१५. A D: स्यैवाव; D: अवच्छेदो यावत्कल्पते
१६. E omits क
१७. A: उपपद्यते
१८. A E omit this.
१९. A D E: तत्रापि
२०. A: ततश्च

पादकाः श्रुतयो भेदा[१]पवादकाश्च अद्वितीयवस्तुपर्यवसायिन्यै[२] इति न तेषां विधिशेषार्थवादत्वे[३]संभवः ।

यत्पुनरुक्तम् ‘ भेदप्रतीतिबलात् भेदा[४]भेदश्रुतिबलाच्च जीवपरमेश्वरयोः[५] भेदाभेदौ अभ्युपेयौ[६] ’ इति, तदसत्; भेदप्रतीतेः भेदानुवादिश्रुतीनां च अविद्याविषयत्वात्, “ अथ योऽन्यां देवतामुपास्ते अन्योऽसौ अन्योऽहमस्मि इति न स वेद ” (Bṛh., I, iv, 10) इति[७] श्रुतेः [ऐका[८]त्म्यस्यैव सत्यत्वात, “ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा ” (Chand., VI, viii, 7) इति श्रुतेश्च[९] ।]

यच्चैतत् कैश्चिदुत्प्रेक्षितम् ‘औपाधिकं जीवत्वम्, तथापि तस्य प[१०]रमार्थतो[११] भा[१२]वान्तरत्वम्’ इति, तदपि प्रमाणशून्यमेव सं[१३]जल्पितम्; उपाधेः ब्रह्मणो भेदेन अभेदेन[१४] वा अनिरूपणात, उपाधिस्व[१५]रूपनिरूपणेऽपि औपाधिकरूपस्य स्फटिकलौहित्यवत् मिथ्यात्वात् । तस्मात् न पूर्वोक्तात् पक्षात्[१६] कश्चिद्विशेषः । तस्मात् जीवब्रह्मणोः ऐ[१७]कत्वमेव, न भेदगन्धोऽप्यस्ति इति निरवद्यम् ।

इति तत्त्वशुद्धौ जीवब्रह्मैकत्वनिरूपणप्रकरणम् ।



---

१. C: भेदापवादिकाश्च ;
D: भेदापवादाश्च ;
E: भेदोपपादश्च
२. A: सायिनः ;
D: सायिकाः ;
E: सायार्थिनः
३. D omits त्व
४. A: भेदश्रुति
५. A C: जीवपरयोः
६. C: अभ्युपेयाता इति
७. A D: इत्यादि
८. D omits the part bracketed.
९. A drops च
१०. E: तस्यापरमार्थतो भावाभावत्वमिति
११. C adds न
१२. A: भावाभावत्वमिति
१३. A omits सं ;
D: संकल्पितम्
१४. A: भेदेन चाभेदेन चानिरूपणात् ;
C: भेदाभेदेन ;
D: भेदाभेदनिरूपणात् ;
E: भेदेन वादनिरूपणात्
१५. D: स्वरूपेऽप्यौपाधिक
१६. C omits पक्षात् ;
D: पूर्वोक्तपक्षात्
१७. D: अभेद for एकत्व

## ॥ ब्रह्माज्ञाननिरूपणं एकोनचत्वारिंशम् ॥

यः सर्ववस्तुजनिपालनसंहृतीनामेकः क्रमेण[1] गुणसङ्गितयैव हेतुः ।
मायाविचित्रपटसंवृ[2]तबोधमूर्तिः तं प्रत्यगद्वयमहं प्रणमामि विष्णुम्[3] ॥

इ[4]दमिदानीं जिज्ञास्यते 'किमज्ञानं जीवाश्रयं किं[5] वा ब्रह्माश्रयम्?' इति । इ[6]ह केचित् स्वै[7]यूथ्याः प्रतिपादयन्ति—'अ[8]हमज्ञः' इति अज्ञानस्य जीवाश्रयत्वं प्रत्यक्षम् । न हि[9] 'ब्रह्म अज्ञम्' इति प्रतीतिरस्ति । न च[10]प्रतीयमानं[11] तत्कल्पयितुं शक्यम् । अज्ञानस्यापि अज्ञानसद्भावा[12]भ्युपगमे प्रमाणगम्यत्वं ब्रह्मवत् स[13]त्यत्वं च दु[14]र्वारमापद्येत । अ[15]पि च ब्रह्माश्रयाज्ञानाभ्युपगमे प्रमाणान्तरविरोधो दुष्परिहे[16]रः । तथा हि । "यः सर्वज्ञः सर्ववित्[17]" इत्यादिश्रुतेः ब्रह्म सर्वज्ञमिति वि[18]ज्ञायते । न[19] चैकस्य युगपत् अज्ञत्वे[20]सर्वज्ञत्वे संभवतः । ततश्च ब्रह्माश्रयाज्ञानाभ्युपगमे सर्वज्ञत्वश्रुतिव्या[21]कोपः स्यात् । अतो जीवाश्रयं ब्रह्मविषयं अज्ञानम् । आश्रयविषय-भेदापेक्षं चाज्ञानम्, कस्य कस्मि[22]न्नज्ञानमिति अपेक्षादर्शनात् । ततश्च जीवाश्रयस्य ब्रह्म-

---

१. A wrongly corrects this into क्षणेन
२. E: संसृत
३. A E: नित्यम् ; C: कृष्णम्
४. C omits इदमिदानीं जिज्ञास्यत ; D: संप्रति विचार्यते
५. A C E: आहोस्वित्
६. D adds खलु
७. D: सयूथ्याः
८. E omits अहं
९. D omits हि
१०. D drops च
११. A D add अपि
१२. A: संभवा
१३. D: सत्यत्वेन, omitting च
१४. A E: दुर्निवारमासज्येत
१५. D omits अपि च
१६. D E: हारः
१७. Mund., I, i, 9.
१८. D omits वि
१९. A: न चास्य
२०. D: सर्वज्ञत्वा(त् ?)सर्वज्ञत्वे
२१. A C omit व्या
२२. C D: कस्मिन्निति

विषय[1]स्याज्ञानस्य निवृत्तये जीवस्य[2] ब्रह्मोपदेशो युक्तः। अन्यथा ब्रह्माश्रयाज्ञानस्य जीवविषय[3]त्वे ब्रह्मणो जीवोपदेशविषयं शास्त्रमिति वैपरीत्यमापद्येत। न चैवं मन्तव्यम्[4] 'अज्ञानसम्बन्धे सति जीवत्वम्, जीवत्वे सति अज्ञानसम्बन्ध इत्यन्योन्याश्रयप्रसङ्गः' इति[5]; अज्ञानस्य भ्रान्तित्वेन न्यायनिरूपणानपेक्ष[6]त्वात्, प्रतिभासमात्रशरीरत्वाच्च। प्रतिभासश्च 'अहमज्ञः' इति सर्वलोकसाक्षिक इत्युक्तम्। अतो न ब्रह्माश्रयमज्ञानम्, किं तु जीवा[7]श्रयमेव। बहवश्च जीवाः। तेषां प्रत्येकमज्ञानानि भिन्नानि। तानि च भ्रान्तितत्संस्कारप्रवाह[8]रूपेण अनादीनि, न दण्डायमानरूपेण। तैरेव[9] च साधारणलक्षणो बाह्याध्या[10]त्मिकः प्रपञ्चः परिकल्पितः। अत एव च[11] स्वाज्ञानपरिकल्पितत्वात् सर्वेषां प्रपञ्चप्रतिभासो न विरुध्यते। "तत्त्वमसि[12]" इति ब्रह्मात्मैकत्वा[13]वगमे सति स्वसाधारणसम्बन्ध[14]प्रध्वंसेन तस्यैवापवर्गः; इतरेषां च विवेकज्ञा[15]नरहितानां अनिवृत्ताज्ञानत्वात् बन्[16]धः इति बद्ध[17]मुक्तव्यवस्थापि घटते। एकजीवपक्षे जीवान्तरस्य विदुषोऽन[18]भ्युपगमात् आचार्याभा[19]वप्रसङ्गः; तत[20]श्चोपदेशाभावे

---

१. D: विषयाज्ञानस्य

२. E: जीवस्योपदेशो

३. E: जीवविषयन्तु जीवगतमेव। बहवश्च जीवाः: See lower down. Thus E evidently drops a few sentences.

४. D: वक्तव्यम्

५. D omits इति

६. D: पेक्षणात्

७. A C: जीवगतमेव

८. C omits प्रवाह; E: प्रमाणरूपेणैव च साधारणलक्षणो

९. C: तैरेव स्वसाधारणरूपो; D: साधारणासाधारणलक्षणो

१०. A E: बाह्याध्यात्म; D: बाह्याध्यास्य

११. C D omit च

१२. Chand., VI, viii, 7.

१३. D: कत्वे साधारण

१४. A D: सम्बन्ध

१५. A: विज्ञान

१६. C omits बन्ध इति

१७. All mss. read बन्ध, but बद्ध seems to be the correct text.

१८. C: अभावात्

१९. C: अभावः; ततश्च; E omits आचार्य

२०. E: ततश्चोपवादे न पुनस्तत्त्वविदोऽनुमन्यन्ते

विद्याभावः, विद्याभावे च मोक्षाभावादनिर्मोक्षप्रसङ्गः। [कथञ्चिदेकस्य विद्योदये च तद्विद्ययैव समस्तप्रपञ्चनिवृत्तेः नेदानीं प्रपञ्चोपलब्धिः स्यात्।] तस्मात् अनन्ता जीवाः, तदाश्रयं चाज्ञानम्—इति।

तदेतत् भेदवासितान्तःकरणैः अपरिपक्वविद्यया समुत्प्रेक्षितं न पुनस्तत्त्व-विदोऽनुमन्यन्ते। 'ब्रह्मैव संसरति ब्रह्मैव मुच्यते' इति हि तत्त्वविदां स्थितिः। ब्रह्मण एव परमार्थवस्तुत्वात्, तस्य चाद्वितीयत्वात्, परमार्थे च अपरमार्थाविद्यातत्कार्य-कल्पनोपपत्तेः। न हि शुक्तिकारजतादावपरमार्थे किञ्चिदन्यत्कल्पितमुपलभामहे। लोके च मुखाकाशादि[स्वरूपेणैव दर्पणघटाद्युपाधिसम्बन्धो दृश्यते। एवमद्वितीय-चैतन्यमात्रेणैव अविद्यासम्बन्धो युक्तः, नाविद्यावच्छिन्नेन घटाकाशादि]स्थानीयेन जीवेन; आत्माश्रयप्रसङ्गात्। न च प्रतिभासस्य अन्यथापि संभवे सति न्याय-विरोधेनैव प्रतिभासस्य गतिकल्पनं युक्तम्। तथा हि। अज्ञानाहङ्कारयोः एकचैतन्य-सम्बन्धात् परस्परसम्बन्धप्रतिभासो 'अहमज्ञः' इति; न पुनरहङ्कारस्य तदुपाधि-

१. All except C wrongly read अविद्याभावः
२. A E: अविद्या
३. A drops the portion within brackets.
४. D: अपि for च
५. D: जीवाश्रयं
६. D: विद्यतया
७. D omits अनु
८. A D omit हि
९. A corrects तत्त्वतास्थितिः into तद्विदां स्थितिः
१०. D omits तस्य चाद्वितीयत्वात्
११. A: परमार्थत्वे
१२. C: कल्पनम्
१३. D: शुक्तिरजता
१४. E omits the part within brackets.
१५. D: घर्षण
१६. C: अविद्यातत्कार्यसम्बन्धो
१७. D adds एव; A E: जीवेनैवावच्छिन्ने अवच्छेद इत्यात्माश्रयत्वप्रसङ्गात्
१८. A E add वा; D adds न
१९. D: अहमरो इति
२०. E: नपुंसकाहंकारस्य

कस्य वा[1] अज्ञानाश्रयत्वसंभवः, अन्योन्याश्रयत्वे[2]प्रसङ्गात् 'चैतन्य[3]स्य अज्ञानाश्रयत्वे सति अहङ्कारस्वरूप[4]सिद्धौ तदुपाधिकजीवत्वलाभः, जीवत्वे च[5] सिद्धे तस्याज्ञानाश्रयत्वसिद्धिः' इति। न चानयोरनादित्वेन परिहारः, परस्परानपेक्षत्वे जीवभावस्य स्वाभाविकत्वप्रसङ्गात्। तदेवं एकाग्नि[6]सम्बन्धात् दाहकत्वाय[7]सोरिव एकचैतन्यसम्बन्धात् अहङ्काराज्ञानयोः परस्परसम्बन्धप्रतिभासः। अज्ञानं पुनः[8] अकल्पितचैतन्यमात्रा[9]श्रयम्। तथा हि '[10]विगीतमज्ञानं अकल्पिता[11]श्रयं भवितुमर्हति, मिथ्यात्वात्, रजतादिवत्' [12]इति। तथा 'अज्ञानं [13]धर्मि स्वानपेक्षसत्ताप्रतीति[14]वस्तुसम्बन्धि भवितु[15]मर्हति, उपाधि[[16]त्वात्, दर्पणघटादिवत्'। त[17]था 'जीवोऽवि[18]द्याश्रयो न भवति, अविद्या]निमित्तसत्ताप्रतीतिकत्वात्, रज्जुसर्पवत्'। तथा 'जीवोऽज्ञानाश्रयो न भवति, परिच्छिन्नत्वात्, घटा[19]दिवत्'। न च वाच्यम् 'निरुपाधिकचैतन्यस्य जीवभाववत् ब्रह्मभावस्यापि अविद्याकृतत्वात् ब्रह्माश्रयत्वपक्षेऽपि तुल्य एव दोषः' इति; निरुपाधिकचैतन्यस्यैव[20] ब्रह्म[21]त्वाभ्युपगमात्। न पुनरविद्याप्रतिबिम्बितमेव सप्रतियोगिकं ब्रह्म अज्ञानाश्रयमिष्यते। तत्र यदुक्तम् '"ब्रह्माज्ञम्" इति प्रतीत्यभावात् अज्ञानस्यापि[22]-

---

१. D: च
२. D omits त्व
३. D: चेतनस्य
४. A D E omit सिद्धौ
५. D omits च सिद्धे
६. E omits ग्नि
७. D: कत्वायःपिण्डयोरिव
८. A D E: पुनः कल्पित
९. D: चैतन्याश्रयम्
१०. C omits विगीत;
D: विमतमज्ञानं;
E: विगीतविज्ञानं
११. A: परिकल्पिता
१२. A D omit इति तथा
१३. C omits धर्मि
१४. D: प्रतीतिक
१५. C omits भवितुमर्हति
१६. D omits the portion within brackets.
१७. A: तथापि जीवो धर्मी;
D: जीवो नाज्ञानाश्रयो भवितुमर्हति
१८. E adds धर्मी after जीवो
१९. D: रज्जुसर्पवत्
२०. A E omit एव
२१. D: ब्रह्मभावाभ्युप
२२. A D omit अपि;
D: ज्ञातत्वे च

ज्ञानसत्त्वे च प्रमाण[1]वेद्यत्वप्रसङ्गः ' इति, तदप्[2]येनालोचितवचनमिव दृश्य[3]ते ; अज्ञानस्य विशिष्टसम्बन्धप्रतिभा[4]से तद्गतस्वरूपेणापि सम्बन्धप्रतिभासस्य दुर्वारत्वात्। अतो नो[5]प्रतीताज्ञानकल्पनम् ; नापि तस्य प्रमा[6]णवेद्यत्वप्रसङ्गः ।

यत्पुनरुक्तम् ' ब्रह्माज्ञानपक्षे सर्वज्ञत्व[7]श्रुतिकोपः स्यात् ' इति, तदपि विद्या[8]परिपाकाभावादेव समुद्भावितम् ; अज्ञानाश्रयत्वादेव सर्वज्ञत्वसिद्धेः । न ह्य[9]विद्याश्रयत्वमन्तरेण तत्परिकल्पितप्रपञ्चविषयं सर्वज्ञत्वं [10]किञ्चिज्ज्ञत्वं वा संभवति । अतोऽलङ्कार एव सर्वज्ञं प्रत्यविद्याश्रयत्वम् । न चाश्रयविषयभेदापेक्षमज्ञानम्, आवरणत्वात् । आवरणं चा[11]ज्ञानमे[12]वगम्यते ; " अज्ञानेनावृतं ज्ञानम्[13] " इति स्मृतेः। अतो वस्त्रादिवत् आश्रयमे[14]वावृणोत्यज्ञा[15]नम् । तमस्त्वाच्च ; य[16]था तमः प्रदेशविशेषमाश्रित्य तमेवावृणोति, एवमज्ञानमपि । अक्रियात्म[17]त्वात् [18]च न विषया[19]त् पृथग्भूतं आश्रयमपेक्षते ।

यच्चोक्तम् ' " कस्य कस्मिन् अज्ञानम् ?" इति आश्रयविषयभेदापेक्षमज्ञानं प्रतीयते ' इति, तदपि द्वयसापेक्षज्ञानपर्युदासेनोच्यमानत्वादेव, [20]न स्वतः । यथा द्वयासापेक्षगमनपर्युदासेन अगमनशब्देनोच्यमाना स्थितिः द्वयानपेक्षापि द्वयसापेक्षेव[21] [[22]प्रतिभाति क[23]स्य क[24]स्मिन्नगमनमिति, तथेहा[25]पि द्रष्टव्यम् । तस्मात् अखण्डैकरसमेव

---

१. A D: प्रमाणावेद्यत्व
२. C: तदप्यचारु
३. A E: लक्ष्यते
४. D: भासने
५. C: न प्रतीत
६. C: अवेद्यत्व
७. A: सर्वश्रुति ;
D: सर्वज्ञस्य
८. C: विद्यायाकाभावादेव
९. D omits हि
१०. C: सर्वज्ञत्वमसर्वज्ञत्वं वा
११. C: हि for च ;
D: आवरणत्वं चावगम्यते
१२. C: अभ्युपगम्यते
१३. Gītā., V, 15.
१४. D omits एव
१५. D: अज्ञानतमस्त्वात्
१६. A adds च
१७. C: त्मकत्वात्
१८. D drops च
१९. D: विषयपृथग्भूतं
२०. D omits न स्वतः
२१. C: सापेक्षवत्
२२. E omits the part within brackets.
२३. A: तस्य
२४. A: कस्माच्चा
२५. D: तथैव

ब्रह्मचैतन्यं अज्ञानसम्बन्धादेवं[1] दर्पणसम्बन्धादिव मुखं बिम्बप्रतिबिम्बरूपेण] विषयवदाश्रयवच्च प्रतिभाति[2]। ततश्च एकोपाधिसम्बन्धात् एक एव जीवः। स खलु स्वाज्ञानपरिकल्पितानन्तजीवाभासाननुपश्यति[3]। तदेवं जीवभेदावभासात् एव[4] आ प्रबोधात् स्वप्नावस्थायामिव गुरुशिष्यबद्धमुक्तजीवेश्वरादिसकलव्यवस्थाप्रतिभा[5]-सोऽपि संपद्यते[6]। न चानेकजीवपक्षे जीवानामन्योन्यं प्रतिभासो[7] घटते। सर्वेषामेका-ज्ञानपरिकल्पितत्वेन[8] एकं प्रत्यवभासमानत्वे सति तेषां[9] तदज्ञानपरिकल्पितत्वात् न तेष्वज्ञानसंभवः[10]। ततस्तान् प्रत्यसौ नावभासेत[11]। एवं प्रतिजीवं अन्योन्यप्रतिभासो न स्यात्। अत एव 'शुको मुक्तो वामदेवो मुक्तः' इत्यादिश्रुतिस्मृतीतिहासपुराणानि एकजीवमुक्तेरर्थवादः। न चैकमुक्तौ[12] सर्वमुक्तिप्रसङ्गः, अनेकजीवानभ्युपगमात्। 'कोऽसावेको जीवः[13]?' इत्यपि सन्देहो न भवति[14]; यस्येयं विचिकित्सा सोऽहमेको जीव इति तस्य निश्चयोपपत्तेः। न च 'सर्वेषामस्ति विचिकित्सा' इति शङ्कनीयम्, स्वप्नदृष्टजीवान्तरवदेव[15] अन्येषामाभासत्वस्य[16] दर्शितत्वात्[17]। तस्मात् एकाविद्यापरिकल्पितोऽयं जीवेश्वरत्वजगदाकारभेदावभासः।

ननु ब्रह्मगताविद्यायां[18] किं प्रमाणम्? श्रुतिस्तदर्थापत्तिश्चेति ब्रूमः। श्रुति-

---

१. A: अज्ञानादेव
२. A: आभाति; E: भवति भाति
३. C: जीवनिर्भासान्; D: जीवाभासनात्
४. C omits एव
५. A E: बन्धमुक्ति; D: बन्धमुक्त
६. D: सम्बध्यते
७. A E add अपि
८. D: ज्ञान
९. D: तदभान
१०. D: तेषु ज्ञान; E: तेष्वज्ञाने संभवत
११. D: भासत एव
१२. C: एकजीवमुक्तौ
१३. C: जीवतीत्यपि; D omits जीव
१४. A D: संभवति
१५. C omits एव
१६. A D: असत्त्वस्य
१७. C adds एव
१८. C: अविद्येत्यत्र

स्तावत् "अनृतेन हि प्रत्यूढाः" (Chānd., VIII, iii, 2) "त इमे सत्याः कामा अनृतापिधानाः" (Chānd., VIII, iii, 1) "अनीशया शोचति मुह्यमानाः" (Śvet., IV, 7) इत्याद्या। "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः" (Gītā, V, 15) इति च स्मृतिः। तथार्थापत्तिरपि—"तरति शोकमात्मवित्" "ब्रह्म वेद ब्रह्मैव भवति" (Muṇḍ., III, ii, 9) इत्यादिषु ब्रह्मविद्या मोक्षसाधनत्वेन [[1]श्रूयते; सा चेयमनुपपन्ना स्वनिवर्त्यतद्गताविद्यामन्तरेण—इति। न[2]नु स्वयंप्रकाशं ब्रह्म; तत्र कथमविद्या संभवेत्? किमिह स्वयंप्रकाशस्य अ[3]ज्ञान]–विषयत्वं पर्यनुयुज्यते? किं वा तदाश्रयत्वम्? न तावत् स्वयंप्रकाशत्वं अज्ञानविषय[4]त्वविरोधि, स्वयंप्रकाशेऽपि संवेदने अज्ञा[5]नविपर्यासदर्शनात्। अपि चाज्ञानस्वरूपं चेत् इष्टम्, तत् स्वयंप्रकाशविषयमेव; जडे अज्ञा[6]नकृत्याभावात्। जडस्य स्वयं अनव[7]भासरूपत्वादेव अप्राप्तावभा[8]सत्वात् न[9] तत्राज्ञानस्य तदवभा[10]सविरोधित्वम्। न च[11] जडविषयप्रमाणावभासविरोधितया अज्ञानमु[12]पतिष्ठते, स्वयं तन्निवर्त्यत्वात्। न च जडे [13]ज्ञानाभावादेव प्रमाणप्रवृत्तिरपि संभवति। तस्मात् अज्ञानं चेदस्ति, तत् स्वतःसिद्धावभासविरोधितया स्वयंप्रकाशविषयमेव। प्रमाणमपि तन्निवर्तनेन तत्रै[14]वार्थवत्।

---

१. E omits the portion bracketed.
२. C omits ननु
३. D: ज्ञानविषयत्वं
४. C omits विषयत्व
५. C: अज्ञान
६. D: दुज्ञानवृत्त्याभावात्
७. A: स्वरूपादेव; D: भासमानरूपादेव
८. C: भासरूपत्वात्
९. C omits न
१०. C: भासाविरोधित्वात्
११. C drops च
१२. C D: अवतिष्ठते
१३. C. अज्ञान
१४. A: तत्रैवात्मवत्; C omits एव

व्यवहारावस्थायां तु जडस्य[1] स्वयंप्रकाशेऽध्यस्तत्वात् तद्विषयमेव प्रमाणम् । निवर्त्यं[2] चाज्ञानं तदभेदात् जडविषयमिवावभासते इति न व्यवहारविरोधः । तदेवमज्ञानस्य आश्रयविषयभेदाभावात् यद्विषयं तदाश्रयमेवेति स्वयंप्रकाशस्यैव युक्तमज्ञानाश्रयत्वम् । जडस्य तु न कदाचिदज्ञानाश्रयत्वं[3] दृष्टमुपपन्नं[4] वा इति वैषम्यम् । तस्मात् ब्रह्मविषयं ब्रह्माश्रयमेवाज्ञानम् । तेन च[5] ब्रह्मैव संसरति ब्रह्मैव मुच्यते इति सर्वं[6] सुव्यवदातम् ।

इति तत्त्वशुद्धौ ब्रह्माज्ञाननिरूपणप्रकरणम् ।

---

१. D: जडदृश्य

२. C: तन्निवर्त्यम् ;

 E: निवृत्तम्

३. C: अज्ञाश्रयत्वं

४. D: दृष्टमिष्टं वेति

५. C omits च

६. D: सर्वमवदातम्

## ॥ समुच्चयवादनिराकरणं चत्वारिंशम् ॥

निःशेषपुण्य[1]शिथिलीकृतपापबन्धै-
यैत्राप्यते विविदिषा पुरुषैर्विशुद्धैः ।
ब्रह्मण्यखे[2]ण्डसुखबोधतनौ परस्मिन्
वन्दामहे तम[3]जमच्युतमञ्जनाभम् ॥

अथेदानीम् ' किं[4] कर्माणि साक्षान्मोक्षसाधनानि, किं वा प[5]रम्परया ? ' इति विचार्यते । इह खलु केचिदाचक्षते—काम्या[6]नारंभात् केवलपुण्यफलं दे[7]वादिजन्म न प्राप्यते । तथा निषिद्धपरिहाराच्च[8] केवलदुरित[9]फलं तिर्यगादिजन्म न प्रतिपद्यते । अत एव व्यामिश्रफलं मानुष्यं न भविष्य[10]ति । नित्यनैमित्तिकानु[11]ष्ठानाच्च तदकरणनिमित्तः [12]प्रत्यवायः [13]प्रहरिष्यते । उपचितकर्मणां [14]च शुभाशुभलक्षणानां [15]ऐकभविकन्यायेन एकस्मिन्नेव जन्मनि उपभोगेन क्षयः । अतश्च पुनः संसारहेत्वभावात् स्वा[16]त्मन्यवस्थानलक्षणो मोक्षः साक्षात्कर्मफलमेव—इति । अपरे तु ' पूर्वोक्तन्यायेन काम्यप्रतिषिद्धवर्जनात्, उपचितानां च उपभोगेनैव क्षयोपपत्तेः, नित्यानां

---

१. D: मखिलीकृत
२. C: अनन्तसुखबोधघने
३. C: तमिमम् ;
E: तमहम्
४. A D E omit किं
५. D: पैरष्यति नित्यनैमित्तिककर्मानुयन्त्रैभिर्विचार्यते ।
६. A: काम्यानामनारंभात्, which was subsequently corrected into आरंभात् ;
D: पुण्यकर्मणां for काम्यानां
७. D: देवतादिजन्म प्राप्यते
८. C omits च
९. D: दुष्कृत
१०. A: भवति ; D adds इति
११. D: कर्मानुमानाच्च
१२. C: तत्प्रत्यवायः and omits the visarga preceding.
१३. A E: परिहीयते ; D: प्रतिक्रियते
१४. C omits च
१५. A: ऐकविभक्तिक ;
D: एव भविष्यन्यायेन
१६. C omits स्व

तु[1] फलाभावात्, कर्मणैव कैवल्यम्' इति मन्यन्ते। [2]केचित्तु सांसारिकफल-विलक्षणं मोक्षफलं शास्त्रप्रामाण्यादेव अभ्युपगम्य तत्साधनं नित्यनैमित्तिकलक्षणं[3] कर्म इति कल्पयन्ति। तथा[4] हि—निषिद्धानां दुरितफलत्वात्, अभ्युदयफलत्वाच्च काम्यानां पारिशेष्यन्यायेन साधनसाकाङ्क्ष[5]मोक्षस्य अनुपलभ्यमानफलान्तरं नित्या[6]दिकं कर्म साधनत्वेन सम्बध्यते—इति[7]। यदि च अग्निहोत्रादिकर्मव्यतिरेकेण अपवर्गमुद्दिश्य साधनान्तरं विधीयेत[8], तदा यावज्जीवश्रुतिरुपरुध्येत[9]। "कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः", (Īśa, 2) "यावज्जीवमग्निहोत्रं जुहुयात्" इति हि[10] श्रुतिः। स्मृतिरपि कर्मणैव मोक्षं दर्शयति—

"कर्मणैव हि संसिद्धिमास्थिता जनकादयः।" (Gītā, III, 20)
"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति[11] मानवः।" (Gītā, XVIII, 46)

इत्याद्यौ[12]। एवं च सति ज्ञानादेव मोक्षमाचक्षाणा वेदान्ता मोक्षसाधनभूतकर्मानुष्ठानोपयोगिनियोज्या[13]त्मज्ञानस्य अर्थवादा भविष्यन्ति। तस्मात् कर्माण्येव साक्षा[14]न्मोक्षसाधनानि—इति।

अन्ये तु ज्ञानान्मोक्षमिच्छन्तोऽपि नित्यादिकर्मसमुच्चितादेव, [15]न केवलात् इति प्रतिपेदिरे। तथा हि—ज्ञानकर्मणोरुभयोरपि मोक्षसाधनत्वमवसीयते। कर्मणस्तावत् "[16]यज्ञेन दानेन तपसानाशकेन ब्राह्मणा विविदिषन्ति"

---

१. A C E: च
२. A E: यत्तु; D omits तु
३. C drops लक्षणं
४. D omits तथा हि
५. D: साकाङ्क्षस्य मोक्षस्य
६. C: नित्यनैमित्तिकं
७. C omits इति
८. C D E: विधीयते
९. D: उपरुध्यते
१०. A D omit हि
११. D E: विन्दन्ति मानवाः
१२. E: इत्याद्याः
१३. C omits नियोज्य
१४. D omits साक्षात्
१५. C: न तु
१६. A: यज्ञेनेत्यादिश्रुतौ तत्साधनत्व सिद्धिकथनं तावत्

(Cp. Bṛh., IV, iv, 22) इत्यादिश्रुतेः तत्साधनत्वसिद्धिः। कथम्? तत्र न तावद्विविदिषा साध्या, अफलत्वादिच्छायाः, अशक्यत्वाच्च तत्साध्यत्वस्य[1]। न[2] हीच्छा पुरुषेण[3] जनयितुं निवर्तयितुं वा शक्या। तथा हि। सा हीच्छाविषयेऽवगते[4], तस्मिन् अनिष्टेऽनवगते वा? अथ तावदवगते, न तत्रेच्छा साध्या; प्रागेव सिद्धत्वात्[5] तद्विषयेच्छायाः। नापीच्छाविषये अनवगते अनिष्टे च तत्रेच्छा साध्या भवति; अनिष्टविषये सुषुप्ते वा दुःसाध्यत्वादिच्छायाः। तस्मात् नेच्छामात्रम्[6] साध्यम्। ततश्च इष्यमाणप्रधानत्वादिच्छायाः इष्यमाण[7]ज्ञानमेव यज्ञादिसाध्यतया [8]तत्र प्रतिपाद्यन्ते[9] इति गम्यते। तच्चा[10]शक्यम्; लोके ज्ञानस्य चक्षुरादिसामग्री[11]साध्यत्वदर्शनात्। अतो यज्ञादेः ज्ञानसम्बन्धाभिधानेन[12] तत्साध्य[13]मोक्ष एव लक्ष्यते। तस्मात् विविदिषावाक्या[14]देव कर्मणां मोक्षसाधनत्वनिश्चयः। तथा ज्ञानस्यापि "ब्रह्मविदाप्नोति परम्" (Taitt., II, i, 1) "ब्रह्म वेद ब्रह्मैव भवति" (Muṇḍ., III, ii, 9) "तरति शोकमात्मवित्" (Chānd., VII, i, 3) इत्यादिषु मोक्षसाधनत्वं प्रसिद्धम्। क्वचिच्च समुच्चितयोरेव साधनत्वमुपलभ्यते "विद्यां चाविद्यां च यस्तद्वेदोभयं सह", (Īśa, II) "तं विद्याकर्मणी समन्वारभेते", (Bṛh., IV, iv, 2) "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति", (Chānd., I, i, 10) इत्यादौ। 'न चैतदाशङ्कनीयम् "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" (Mahānārāyaṇa, X, 5) "नान्यः पन्था विद्यतेऽयनाय" (Śvet. VI, 15) "नान्यै-

---

१. A D E: तत्साधनस्य

२. A: नन्विच्छाया पुरुषेच्छया निवर्तयितुं शक्या

३. D: पुरुषेच्छा निवर्तयितुं

४. A: अस्मिनिविमपर्यिकृते च ताच तावन्न तलेच्छा; D: तस्मिन्नपि विन्वितीकृते तावन्न

५. C D E omit तत्

६. D: मात्रमत्र। ततश्च

७. A: माणमात्मज्ञानमेव

८. C: अत्र

९. D: पाद्य इति

१०. D: ततश्च

११. E omits सामग्री

१२. D: साधने

१३. C. साध्यो; D E: तत्साधनमोक्ष

१४. D: वाक्यमेव

देवैः तपसा कर्मणा वा " इत्यादावाहत्य मोक्षसाधनत्वप्रतिषेधे सति कर्मणां[१] कथं मोक्षसम्बन्धः कल्प्येत ?' इति ; केवलकर्मविषयत्वात्प्रतिषेधस्य । न च केवलकर्मसाध्यस्य " तद्यथेह कर्मचितो लोकः क्षीयते " (Chānd., VIII, i, 6) इत्याद्यायाः[२] श्रुतेः लौकिकन्यायाच्चावगतमनित्यत्वं ज्ञानै[३]समुच्चितस्य फले योजयितुं[४] शक्यम् । तत्र " श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते, " " सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः परामृतात् परिमुच्यन्ति सर्वे ", (Mahānārāyaṇa, X, 5) " स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः " (Gītā, XVIII, 45) इत्यादिशास्त्रात् अविशेषेण आश्रमिणां मोक्षसम्बन्धावगमात् स्वाश्रमविहितकर्मसमुच्चितात्म[५]ज्ञानं मोक्षसाधनमिति गम्यते । तस्मात् ज्ञानसमुच्चितं कर्म साक्षादेव मोक्षसाधनम् —इति ।

तत्र[६] प्रतिविधीयते । न खलु कर्मणां मोक्षसाधनत्वे प्रमाणमस्ति । न च यावज्जीवा[७]दिश्रुत्यनुपपत्तिरेव प्रमाणम्, यावज्जीवादिश्रुतेः अन्यार्थत्वस्य वक्ष्यमाणत्वात् । नापि 'हेत्वभावे[८] फलाभावः' इति न्यायेन कर्मणां मोक्षसाधनत्वलाभः[९], हेत्वभावस्या[१०]सिद्धत्वात् । तथा हि । न तावत् सकल[११]काम्यनिषिद्धपरित्यागो जीवता पुरुषेण कर्तुं शक्यः, सुनिपुणानामपि सूक्ष्मापराधोपलब्धेः । " त इह रमणीयचरणा रमणीयां योनिमापद्येरन् अथ य इह कपूयचरणाः कपूयां योनिमापद्येरन् " (Chānd., V, x, 7) इत्यादिश्रुतिभ्यः[१२] कर्मशेषसद्भावा[१३]वगमात् नोपचितकर्मणां प्रत्ये[१४]कमेवानेकजन्मफलानां अश्वमेधब्रह्महत्यादीनां अनन्तानामेकस्मिन्नेव[१५] जन्मन्युपभोगेनैव

---

१. A C: कर्मणः
२. C: इत्यादिश्रुतेः
३. C: ज्ञानस्य कर्मसमुच्चितस्य
४. D: प्रयोजकत्वं तु शक्यम्
५. C D: समुच्चितमात्मज्ञानं
६. E: अत्र
७. D omits आदि
८. D: भावात्
९. D: भावः
१०. D: सिद्धत्वात्
११. D: सर्वात्मना काम्य
१२. A E add च
१३. A E: संभव
१४. C: संप्रत्येव
१५. D omits एव

क्षयोऽवकल्पते । नापि नित्यानुष्ठानं[1] प्रत्यवायपरिहार[2]फलम्, अप्राप्तत्वात् प्रत्यवायस्य । न हि नित्या[3]करणात् अभावात् भावरूपः प्रत्यवायो भवति[4] इति युक्तम् । अपि च प्रत्यवायप्रसक्तौ तत्परिहाराय नित्य[5]विधिप्रवृत्तिः, तत्प्रवृत्तौ च प्रत्यवायप्रसक्तिरिति प्राप्तमितरेतराश्रयत्वम् । नित्य[6]विधेः प्रत्यवायपरिहार[7]फलत्वे वेदः पुरुषस्यानर्थहेतुः स्यात्, स्वयमेव प्रत्यवायं प्रापय्य[8] तन्निवृत्तये दुःखात्मकं कर्म विधत्ते[9] इति । [10]अतः काम्यनिषिद्ध[11]परिहारादिनैव अयत्नतो[12] मोक्षः इत्ययं पक्षस्तावदनुपपन्नः ।

यत्पुनः[13] कैश्चिदुच्यते 'नित्यानां फलमेव नास्ति' इति, तदसत्; "पुण्येन पापमपनुदति" (Cp. Mahānārāyaṇa, 22, 1) इति श्रुतेः उपात्तदुरितक्षय[14]फलत्वसंभवात् । [15]अन्यथा न प्रेक्षा[16]पूर्वकारी साक्षात् वा परंपरया वा सुखदुःखप्राप्तिपरिहारप्रदर्शनव्यतिरेकेण दुःखात्मके कर्मणि प्रेरयितुं शक्यः । ततश्चानर्थकत्वात् शास्त्रमप्रमाणं स्यात् । अथ वा श्रूयते[17] नित्यानाम[18]पि कर्मणां फलम् "कर्मणा पितृलोकः" (Bṛh., I, v, 16) इति । तत्र काम्यानां विध्युद्देशवाक्येन वा विश्वजिन्न्यायेन[19] वा [20]कर्मविशेषस्य फलविशेष[21]सम्बन्धावगमात् "कर्मणा पितृलोकः", (Bṛh., I, v, 16) इति अविशेषवचनं[22] नित्यस्यै[23]वाभिधानमिति गम्यते । न च फल[24]सम्बन्धमात्रेण नित्य-

---

१. D: नित्यानुष्ठानानां प्रत्यवायपरिहारः फलमिति
२. E omits परिहार
३. A corrects into करणात्; D: अकरणत्वात्
४. C: उत्पद्यत इति
५. C: नित्यकर्मविधि
६. A: अनित्यविधेश्च
७. A: हारार्थत्वे
८. C: प्राप्य
९. D: विदधाति
१०. E: युक्तः
११. A D: प्रतिषिद्ध
१२. C: नैवायातो
१३. D: यत्तु कैश्चित्
१४. D omits क्षय
१५. D adds अथ
१६. C: अनपेक्षापूर्वकारी
१७. D omits श्रूयते
१८. C omits अपि
१९. A D: विश्वजिदादिन्यायेन
२०. A adds 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति न्यायेन वा
२१. D omits सम्बन्ध
२२. A E: वचनात्
२३. D omits एव
२४. D omits फल

काम्ययोरविशेषप्रसङ्गः, शुद्धिप्रधानत्वान्नित्यानां फलस्यानुषङ्गिकत्वात् । "एवं धर्मं चर्यमाणमर्था अनू[१]त्पद्यन्ते" (Āp. Dh. Sū., I, xx, 3) इत्या[२]दिस्मृतेः का[३]म्ये पुनर्विपरीतम् । ननु

"अकुर्वन् विहितं कर्म निन्दितं च समाचरन् ।
प्र[४]सज्जंश्चेन्द्रियार्थेषु प्रा[५]यश्चित्तीयते नरः ॥" (Manu, XI, 44)

इति नि[६]त्याकर[७]णात् प्रत्यवायः स्मर्यते ; ततश्च[८] तदनु[९]ष्ठानात्तन्निवृत्तिरिति गम्यते । सत्यम् , [१०]प्रत्यवायो निवर्तत एव ; किं तु नित्या[११]करणेन लक्ष्यमाणः पूर्वोपचितपापनिमित्तः ; न पुनरकरणनिमित्त एव, "लक्षणहेत्वोः क्रियायाः" * इति [१२]हेतुरविशेषेण स्म[१३]रणात् । अतो नित्यानां फलाभाव[१४]पक्षो दुरुपपादः । नाप्यलौकिकमेव मोक्षसु[१५]खं कर्मसाध्यं इति युज्यते ; "पुण्य[१६]चितो लोकः क्षीयते" (Chānd., VIII, i, 6) इत्या[१७]दिश्रुतेः लौकिकन्यायाच्च कर्मसा[१८]ध्यस्य अनित्यत्वावगमात् । नित्यश्च[१९] मोक्षः सर्वैर्मोक्षवादिभिरभ्युपगतः । "न स[२०] पुनरावर्तते" (Chānd., VIII, xv, 1) इति [२१]श्रुतेः साध्यस्यापि नित्यत्वं गम्यत इति चेत् , न ; अप्राप्तप्रतिषेधात् यथा-

---

* Pāṇini, III, ii, 126.

१. C: अनुत्पद्यन्ते ;
   D E: अर्था नोत्पद्यन्ते
२. C D omit आदि
३. C: काम्यं पुनः
४. A: प्रसक्तश्च ;
   D: प्रसज्यंश्च
५. D: प्रायश्चित्तो भवेन्नरः
६. D: न्यायकरणात्
७. A: करणप्रत्यवाय
८. A D omit च
९. D: अनुमाना
१०. E omits प्रत्यवायो
११. A corrects into करणे
१२. C E: कर्तुरविशेषणेन
१३. A D: हेतुलक्षणयोः स्मरणात्
१४. A adds अपि
१५. D: मोक्षः सुखकर्म
१६. C D: जितो
१७. C omits आदि
१८. C: जन्यस्य
१९. D: नित्यो मोक्षः सर्ववादिभिः
२०. A C: न च पुनरावर्तते इति
२१. A E: इति श्रुतिन्यायविरुद्धा, तस्मात् ब्रह्मलोकावाप्तिप्रतिषेधात् यथाश्रुत etc.

श्रुतार्थप्रतिपादनासंभवात् । न हि ब्रह्मलोकमभिसंपद्यमानः तदैव पुनरावर्तते, येन प्रतिषेधः स्यात् । 'नावर्तिष्यते' इति श्रुतिन्यायविरुद्धा । तस्मात् ब्रह्मलोकावा[1]सिफलप्रशंसामात्रमेते[2]त् । " न[3] कर्मणा न प्रजया " (Mahānārāyaṇa, X, 5) इत्याद्याश्च श्रुतयः कर्मणां[4] मोक्षसाधन[5]त्वप्रतिषेधिन्यः सहस्रशो दृश्यन्ते । तस्मात् न केव[6]लकर्मणां मोक्ष[7]साधनत्वं संभवति ।

नापि ज्ञानसमुच्चितानाम्, त[8]त्र प्रमाणाभावात् । न च विविदिषावाक्येन कर्मणां[9] मोक्षसम्बन्धोऽव[10]गम्यते, ज्ञानसाधनत्वाभिधानेन तत्[11]साधनान्तःकरणशुद्धिफलेनैव सम्बन्धप्रति[12]पादनोपपत्तेः । न च ज्ञानसाधनसम्बन्धद्वारेण यज्ञादेः ज्ञानसम्बन्धे सत्यपि श्रूयमाणज्ञानसम्बन्धस्य अत्यन्तपरित्यागेन मोक्ष[13]सम्ब[14]न्धकल्पना युक्ता । अतोऽस्मिन् वाक्ये अन्तःकरणशुद्धिफलानि कर्माण्यधिगतानि । विविदिषासंयोगो वा अस्तु यज्ञादीनाम्, इच्छायाश्च लोके साध्यत्वदर्शनात् । आ[15]तुरादेः अन्नपाना[16]दिविषयेच्छा महता प्रयासेन साध्य[17]माना दृश्यते । द्विविधा हीच्छा[18] संभवति, औन्मु[19]ख्यलक्षणा प्रवृत्तिपर्यन्ता चेति[20] । सामान्येन सर्व-

---

१. D: लोकाप्ति
२. C: मात्रमेव
३. D gives the text in full.
४. A: कर्मणा ;
 C: कर्मणि
५. A: साधनतत्प्रति
६. D omits केवल
७. D: साक्षान्मोक्षसाधनत्वमिति
८. E omits तत्र
९. A: कर्मणा
१०. A omits अव
११. C omits तत्
१२. A: पादकत्वोपपत्तेः ;
 D: पादकोपपत्तेः
१३. C adds न
१४. D; साधनत्व
१५. D: आदरादेः
१६. C E omit आदि
१७. D: साध्यं दृश्यते
१८. C: चेच्छा भवति
१९. D: उन्मुख ;
 E: मुख्यं क्षणप्रवृत्तिपर्यन्ता
२०. C: वेति

जन्तूनां सुखप्राप्तिदुःखपरिहारविषया[१] स्वत एवौन्मुख्यलक्षणा[२] इच्छा अस्ति । अन्यथा तद्विषयेच्छार्थमपि प्रवृत्तिः न स्यात् । तत्र[३] ब्रह्मणः सुखस्वरूपत्वात्[४] तद्विषयौ[५]न्मुख्यलक्षणेच्छायाः[६] स्वतःसिद्धत्वेऽप्यातुरस्येव अन्नपानादीच्छायाः ब्रह्मज्ञानेच्छायाः प्रवृत्तिपर्यन्तायाः साधनान्तर[७]सव्यपेक्षत्व[८]मुपपद्यते । तस्मादस्मिन् वाक्ये[९] यज्ञादेः विविदिषासम्बन्धश्रवणात् तत्परित्यागे च कारणाभावात् न यज्ञादेः मोक्षसम्बन्धाव[१०]गमः । अपि च "येन केनचन यजेतापि दर्वीहोमेन अनुपहतमना एव भवति", इत्यादिश्रुतेः,

"कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥,"
"योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ।" (Gītā, V, 11)

इति स्मृतेश्च[११] यज्ञादेरन्तःकरणशुद्धिसाधनत्वमेव, न मोक्षसाधनत्वमिति निश्चीयते ।

यत्पुनरुक्तम् ' "विद्यां चाविद्यां च" (Īśa, 11) इति समुच्चयः श्रूयते' इति, तदसत् ; "अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" (Īśa, 11) इति कर्मावगमात्[१२] विद्याकर्मणोः फलभेद[१३]श्रवणात् । तथा[१४] भगवान्मनुरपीमं मन्त्रं[१५] [१६]विद्याकर्मणोः फलभेदेन व्याचष्टे

---

१. D: विषयाय संसृतये सर्वौन्मुख्य
२. C: औन्मुख्यत्व ; E: मुख्यलक्षणा
३. A omits तत्र
४. D: रूपत्वात्
५. D: विषयोन्मुख
६. C: लक्षणायां स्वतःसिद्धायामपि
७. D: साधनात् सव्यपेक्ष
८. C: सापेक्षत्व
९. E: साध्ये
१०. D: साधनसम्बन्धावगमः
११. C omits च
१२. C D omit कर्मावगमात्
१३. D omits फलभेद
१४. D: तथा च
१५. D omits मन्त्रं
१६. All except C give अविद्या

“ तपो विद्या च विप्रस्य निःश्रेयस[१]करं [२]द्वयम् ।
तपसा कल्मषं [३]हन्ति विद्ययामृतमश्नुते ॥ ” (Manu, XII, 104) इति।

यद्प्युक्तम् ‘ “ विद्याकर्मणी समन्वारभेते ” इति समुच्चयोऽवगम्यते ’ इति, तदप्ययुक्तम् ; [४]तत्रापि विभागेन अन्वयसंभवात् । विद्यावन्तं विद्यान्वारभते, कर्मवन्तं कर्म इति ; “ कर्मणा पितृलोको विद्यया देवलोकः ” (Bṛh., I, v, 16) इति श्रवणात् । “ यदेव विद्यया करोति ” (Chānd., I, i, 10) [५]इत्यपि कर्मा[६]ङ्गावबद्धोपास[७]नाविषयत्वान्न ब्रह्मविद्यायाः अन्यसमुच्चयं दर्शयति ।’

यदपीदमुक्तम् ‘ “ न कर्मणा न प्रजया ” (Mahānārāyaṇa, X, 5) इत्यादिप्रतिषेधः केवलकर्मविषयो न समुच्चित[८]कर्मविषयः ’ इति, तदपि न्यायहीनम् ; विशेषाभावात् । न हि केवलकर्मविषयोऽयं प्रतिषेधो न समुच्चितविषयः [९]इति किञ्चिद्विशेषं पश्यामः । नापि समुच्चयविधिसामर्थ्यादेव विशेषलाभः, समुच्चये प्रमाणाभावस्य दर्शितत्वात् । अनित्यत्वं च कर्मसाध्यस्य श्रुति[१०]न्यायप्रसिद्धं [[११]न परिहर्तुं [१२]पार्यते ; तयोः सङ्कोचे कारणाभावात् । न च समुच्चयविधिरस्ति येन तद्बलात् सङ्कोचः परि[१३]कल्प्येत । तस्मात् कर्मसाध्यत्वे मोक्षस्य अनित्यत्वं [१४]अत्रापि दुर्वारमेव । [१५]ततश्च “ स्वे स्वे कर्मण्यभिरतः ” (Gītā, XVIII, 45) इत्याद्याश्रमकर्मणां

---

१. A: करौ यतः
२. D: परं
३. A: तीर्त्वा
४. D omits तत्रापि
५. C: इत्याद्यपि
६. D: कर्माङ्गविद्योपासनाविधिपरत्वात् न
७. C: सनादि
८. D omits कर्म
९. C: इत्यत्र ;
D: इति विशेषं
१०. C: सिद्धं ;
D omits न्याय
११. D omits the part within brackets.
१२. C: शक्यते
१३. E: कल्प्यते
१४. C omits अत्र
१५. E omits ततश्च

सिद्धिहे[1]तुत्ववचनं अन्तःकरणशुद्धिमेव कर्मफलं दर्शयति । " स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः " (Gītā, XVIII, 46) ] इति कर्मफलभूतां सिद्धिमुक्त्वा सिद्धिं प्राप्तस्य " बुद्ध्या विशुद्धया युक्तः " (Gītā, XVIII, 51) इत्यादिना शम-दमादीनि[2] बहूनि साधनान्यभिधाय[3] अन्ततो[4] " मां तत्त्वतो ज्ञात्वा विशते[5] तदनन्तरम् " (Gītā, XVIII, 55) इति तस्य केवलादेव ज्ञानात् मोक्षस्य प्र[6]दर्शितत्वात् । अत एव "हि[7] " कर्मणैव हि संसिद्धिम् " (Gītā, III, 20) इत्या[8]दिवचनं कर्मणां[9] परम्परया मोक्षसाधनत्वं एव दर्शयति । यदि जनकादयः तत्त्वदर्शिनः तदा कर्म अपरित्यज्यैव सिद्धिमास्थिताः इति योजना । अतो यावज्जीवादि[10]श्रुतिः[11] अमुमुक्षूणां उपात्तदुरितक्षयद्वारेण[12] प्रत्यवायपरिहा[13]रफल[14]स्यैव कर्मणः[15] संयोगपृथक्त्वन्यायेन[16] विविदिषादिद्वारा ज्ञानोत्पत्तिफला मुमुक्षूणाम् । तस्मात् कर्माणि विविदिषाहेतुत्वेन अन्तःकरणशुद्धिद्वारेण वा[17] ज्ञानोत्पत्तिहेतुत्वात् परंपरया मोक्षसाधनानि इति सिद्धम् ।

इति तत्त्वशुद्धौ समुच्चयवादनिराकरणप्रकरणम् ।

---

१. C: हेतुवचनं
२. A D: दमादिबहुसाधनानि
३. D: अभिधीयन्ते ततो
४. A: अन्ते ततो
५. D: व्यश्नुते
६. C omits प्र
७. A E: च for हि ;
 D: तथैव च
८. D: इति तद्वचनं
९. C E: कर्मपरम्परया
१०. D omits आदि
११. C adds अपि
१२. D: द्वारा
१३. D omits परिहार
१४. A D: फलेनैव
१५. A D: कर्मणां
१६. A C: पृथक्त्वेन
१७. D omits वा

## ॥ आत्मज्ञानाधिकारिनिरूपणं एकचत्वारिंशम् ॥

त्यक्तैषणैः परमहंसवरैरजस्रं
निर्धूतमोहमदमानमनःसरोजे ।
संदृश्यते सकलभूतहृदिस्थमेकं
य[1]द्ब्रह्म नौमि तदखण्डचिदेकरूपम् ॥

सं[2]प्रति विचार्यते ' किं कर्मज्ञानकाण्डद्वयं एकाधिकारम्? आहोस्वित् भिन्नाधिकार[3]म्? ' इति । इह ख[4]लु केचित् वेदान्तवाक्यतात्पर्यापरिज्ञानात् एकाधिकारमाहुः । तथा हि—एकाध्ययनविधिप्रयुक्तत्वात् सकलवेदाध्ययनस्य सकलवेदार्थविचारोऽपि[5] एकाधिकारो युक्तः ; अध्ययनविधेश्च अर्थावबोधप[6]र्यवसायित्वात्, अर्थावबोधस्य विचारमन्तरेणानुपपद्यमानत्वात् । न च अध्ययनविधेः अक्षरग्रहणमात्रे पर्यवसानमवकल्पते, अपुरुषार्थत्वात्तस्य । न चापुरुषार्थे साध्यमात्रे [ विधेः[7] पर्यवसानं संभवति, अ[8]ध्ययनमात्रादेव तत्सिद्धेः अक्षरग्रहणस्याप्यभावप्रसङ्गात् । अतः अध्य[9]यनभावार्थवत् अक्षरग्रहणस्याप्यपुरुषार्थत्वात् साध्यत्वेऽपि तस्य तदुज्झित्वा पुरुषार्थ[10]वबोधे एव ] अध्ययनविधिः पर्यवस्यति । यदि च अध्ययनविधिः अक्षरग्रहणमात्रे पर्यवस्येत्, तदर्थविचारस्य प्रयोजकाभावात् मीमांसाद्वयमनारभ्यं स्यात् । तस्मात् अर्थावबोधपर्यन्तोऽध्ययनविधिः विचारमन्तरेणानुपपद्यमानोऽध्ययनाधिकारिणं प्रति सक[11]लवेदार्थविचारं प्रयुङ्क्ते । अपि च “ वेदः कृत्स्नोऽधि-

---

१. E omits यत्
२. D omits संप्रति विचार्यते ; C: इदमिदानीं विचार्यते
३. E adds एव
४. C: किल ; D omits the word.
५. A E: हि for अपि
६. A E: पर्यन्तत्वात् ; D omits this word.
७. E omits the portion within brackets.
८. A omits अध्ययनमात्रादेव
९. C: अध्ययनवत्
१०. C D: पुरुषार्थभूतार्थावबोधे
११. D: सकलमेव

गन्तव्यः सरहस्यो द्विजन्मना[1] " (Manu, II, 165) इति स्मृतौ अधिगमस्यार्थावबोध[2]-पर्यन्तत्वात् एकाधिकारो निखिलवेदार्थविचार इति प्रतीयते[3] । अपि च नित्यनैमित्तिक-कर्मणां तत्साधनानां च[4] परित्यागे प्रमाणाभावात् तदधिकारिण एव ज्ञानविचारेऽप्य-धिकारः[5] । ऋणापाकरणस्यावश्य[6]कर्तव्यत्वात् च[7] न कर्मपरित्यागो युज्यते । न च " ब्रह्मचर्यादेव प्रव्रजेत् " (Jābāla, 4) इत्यादिशास्त्रात् अग्निहोत्रादि[8]कर्मणामनारंभः प्रारब्धस्य वा परित्यागो विधीयते[9] इति[10]; अन्धपङ्ग्वाद्यनधिकृतविषयत्वात्तस्य । न[11] च " ब्राह्मणः प्रव्रजेत् गृहात् " इत्यादिशास्त्रात् आरब्धस्यैवाग्निहोत्रादेः परित्यागः प्राप्नोति, तस्यापि यावज्जीवश्रुतिविरोधेन कर्मानुष्ठानाशक्तविषयत्वात् । अथापि कथञ्चित् संन्यासशास्त्रादेव समर्थस्यापि चतुर्थाश्रमप्राप्तिः, तथापि[12] स्वाश्रम[13]विहितकर्मत्यागात्[14] कर्माधिकारिण एव ज्ञानाधिकार इति लभ्यते । तस्मात् कर्मज्ञानकाण्डद्वयमेकाधिकारम्—इति ।

अत्राभिधीयते । किं कर्मज्ञानकाण्डयोः परस्परसम्बन्धात् एकाधिकारत्व-मुच्यते, किं वा एकाध्ययन[15]विधिप्रयुक्तत्वात् सकलवेदार्थ[16]विचारस्य, आहोस्वित्क-

---

१. D: द्विजोत्तम

२. A C E बोधत्वात्

३. E: प्रतिविधीयते

४. D omits च

५. E: कारेऽपि ऋणापाकरण

६. D: अवश्यकत्वात्

७. D omits च

८. D: त्रादिकर्मणामेवारंभः

९. A: अवसीयते

१०. A C E omit इति

११. C D E: नापि

१२. D adds च

१३. E: पाक्षविगीत for स्वाश्रमविहित

१४. D: परित्यागात्; A: कर्मात्यागात्

१५. The text in D runs: एकाध्ययन[त्वात् मोक्षस्य । तस्माच्च कर्मज्ञानकाण्डयोः परस्परसम्बन्धः । अथैकाध्ययनविधिप्रयुक्तत्वात् विचारद्वयस्य एकाधिकारत्वं इति मन्येत, तदपि नातिचतुरश्रम्, अध्ययनविधेः अक्षरग्रहणमात्रफलत्वात् अर्थविचारस्य अध्ययनविधिप्रयोज्यत्वाभावात् । कर्मविचारो हि अग्निहोत्रादिविधि]-प्रयुक्तत्वात् सकलवेदविचारस्य, आहोस्वित् कर्मणां परित्यागाभावात्? इति । The portion within brackets is a wrong insertion of a part of the argument that follows later in the same chapter.

१६. D omits अर्थ

मणां परित्यागाभावात्? इति। न तावत् परस्परसम्बन्धे श्रुत्यादिप्रमाणमस्ति। नापि[1] न्यायतः संभवति, शेषशेषित्वस्य वा एकशेषिसम्बन्धस्य वा निरूपयितुमशक्यत्वात्। न तावत्कर्मकाण्डस्य न्यायसहस्रद्वारेण ज्ञानकाण्डे[2]शेषत्वं संभवति, सिद्धसाध्यविषयत्वेन भिन्नन्यायगोचरत्वात्तयोः। नापि कर्मावबोधद्वारेण ब्रह्मज्ञानशेषत्वं संभवति, अनुमानादन्यत्र अर्था[3]न्तरबोधमात्रस्य स्व[4]ज्ञेयद्वारमनपेक्ष्य अर्थान्तरज्ञा[5]नेऽनुपयोगात्[6]। नापि कर्मानुष्ठानद्वारेणोपयोगः, अकर्मसाध्यत्वात् ज्ञान[7]स्य। नापि कर्मफलावाप्तौ [[8]कामप्रविलयात् तद्द्वारेणोपयोगः इति शङ्कनीयम्; वैषयिकसुखानुभवस्य कामोद्भवहेतुत्वात्] का[9]मप्रविलयानुपपत्तेः। नापि ज्ञानकाण्डस्य कर्मकाण्डोपयोगः, ऐकात्म्यवि[10]ज्ञाने सति सकल[11]प्रवृत्त्यनुपपत्तेः। तस्मा[12]त् न काण्ड[13]योः शेषशेषित्वेन सम्बन्धः। नाप्यनयोरेकशेषत्वेन[14] सम्बन्धः, प्रमाणाभा[15]वात् अनुपपन्नत्वाच्च। न च "सर्वे वेदा यत्पदमामनन्ति" (Kaṭha, II, 15) इति सर्वस्य वेदार्थस्य मोक्षसाधनत्व[16]मुच्यते; तत्र[17] वेदशब्दस्य वेदान्तविषयत्वात्; "वेदान्तविज्ञानसुनिश्चितार्थाः" (Muṇḍ., III, ii, 6) इति श्रुत्यन्तरात् "नाहं वेदैर्न तपसा" (Gītā, II, 53) इत्यादि[18]-स्मृतेश्च।

अथ एकाध्ययनविधेः एकं[19] फलं वक्तव्यम्; ततश्चैको मोक्षः काण्डद्वयस्य

---

१. D omits नापि न्यायतः संभवति
२. D omits काण्ड
३. A E: अर्थमन्तरावबोधमात्रस्य
४. A D omit स्व
५. E: ज्ञानानुपयोगात्।
६. D: अनुप्रयोगात्
७. D: अभावस्य
८. C drops the part within brackets.
९. E: काल
१०. D omits वि
११. D: सकल...वृत्त्यनुपपत्तेः
१२. A: तस्मिन्
१३. A E: काण्डद्वययोः
१४. C: एकशेषिसम्बन्धः
१५. C: प्रमाणाभावद्वारेणोपयोग इति शङ्कनीयम्, वैषयिकसुखानुभवस्य
१६. C: साधनत्वं सूच्यते
१७. A: ततस्तत्र
१८. C omits आदि
१९. D: एकफलं

फलमित्युच्यते। तदपि न[1]; तत्तद्विध्युद्देशवाक्येषु[2] स्वर्गपशुपुत्रादिफलान्तरश्रवण-[विरोधात्[3]। न च[4] कर्मणां मोक्षफलत्वसंभवः, ज्ञानमात्रसाध्यत्वान्मोक्षस्य। तस्मान्न कर्मज्ञानकाण्डयोः परस्परसम्बन्धः।

अथैकाध्ययनविधिप्रयुक्तत्वात् विचारद्वयस्य एकाधिकारित्वम्[5], इति मन्येत, तदपि नातिचतुरश्रम्; अध्ययनविधेरक्षरग्रहणमात्रफलत्वात्, अर्थविचारस्य अध्ययनविधिप्रयोज्यत्वाभावात्। कर्मविचारो हि[6] अग्निहोत्रादिविधि]-प्रयोज्यः। ज्ञान-विचारस्तु श्रवणादिविधिविहित[7] एव। न चाक्षरग्रहणं निष्प्रयोजनम्[8], फलवदर्थाव-बोधहेतुत्वात्। ननु यत्सम्बन्धादक्षरग्रहणस्य प्रयोजनत्वं स[9] एव साक्षाद्विधेः प्रयो-जनमस्तु; किमक्षरग्रहणेन? नैतत्सारम्; एवं च[10] सति स्वर्गादेरेव प्रयोजनत्वप्रसङ्गः, तस्यैव पुरुषार्थत्वात्, तत्सम्बन्ध[11]निमित्तत्वादन्यपुरुषार्थत्वस्य[12]। अथ तस्य विध्यन्तर[13]-फलत्वात्[14] नाध्ययनविधिफलत्व[15]मुच्यते[16], तर्हि विधितः[17] स्वीकृताक्षरफलत्वात् अर्थावबो-धस्यापि न विधिफलत्वम्।

स्यादेतत् ' विचारात्[18] प्राक् उत्तर[19]क्रतु[20]विध्यर्थोऽवगतो न[21] वा इति विकल्प-नीयम्। अवगतश्चेत् विचारानर्थक्यप्रसङ्गः। अनवगतश्चेत् स्वयमप्रतीयमानः कथं

१. C E omit न
२. E: तत्तद्विशेषवाक्येषु
३. D omits the portion bracketed.
४. C omits च
५. C: कारत्वं
६. E omits हि
७. D omits विधि
८. D: जकम्
९. E omits स एव
१०. C omits च
११. D: तत्साधन
१२. A E: षार्थत्वस्य। विध्यन्तर omitting अथ तस्य;
C D: पुरुषार्थस्य
१३. D: विधान्तर
१४. D: फलाभावात्
१५. D: फलमित्युच्यते
१६. C: उच्येत
१७. C: विधिस्वीकृताक्षरग्रहणफलत्वात्
१८. D omits विचारात्
१९. D: उक्त for उत्तर
२०. C drops क्रतु
२१. C: अनवगतो for न

विचारं प्रयुनक्ति* ? उत्तरविधिप्रयोज्यत्वे च विचारस्य अनेकविधिप्रयोज्यत्वमाश्रयणीयम् । ततो वरमेकाध्ययनविधिप्रयोज्यत्वम्' इति । तदपि न प्रेक्षापूर्वकारिभिरुत्प्रेक्षितमिव प्रतिभाति ; गृहीतपद[1]पदार्थसम्बन्धस्य व्याकरणाद्यङ्गसहिताध्ययनादेव वाक्यार्थे[2]ष्वापाततः प्रतीतिसंभवात् । अतो [3]नात्यन्तमग्निहोत्रादिविधेर[4]प्रतिपत्तिः । नापि विचारानपेक्षा, प्रति[5]पक्षप्रतिक्षेपेण निर्णयस्य विचारसव्यपेक्षत्वात् । न च विचारस्यानेकविधिप्रयोज्यत्वं दोषाय ; प्रतिवाक्य[6]ार्थं विचारभेदात्, संभूय सर्वविधीनां[7] एक[8]वि[9]चारप्रयोजकत्वा[10]भावात् । न च विचारस्य अध्ययनविधिप्रयोज्यत्वं संभवति, तस्याक्षरग्रहणपर्यवसानादित्युक्तम् । अपि च अर्थावबोधपर्यन्तेऽध्ययने सत्रबृहस्पतिसवादिषु राजन्यवैश्ययोः अन[11]ध्ययनमेव स्यात् । न[12] च तद्युक्त[13]म् ; "वेदः कृत्स्नोऽधिगन्तव्यो सरहस्यो द्विजन्मना" (Manu, II, 165) इति स्मृतेः, स्वाध्यायशब्द[14]सङ्कोचे[15] प्रमाणाभावाच्च[16] । न चानधिकृतकर्मणां [ [17]अननुष्ठेयत्वाय त[18]द्वाक्याध्ययनं तदर्थावबोधश्च इति युक्तम्, [19]अधिकृतकर्मपरिज्ञानादेव [20]अनुष्ठेयनिश्चयोपपत्तेः [21]अनधिकृतानामप्राप्तानुष्ठानत्वात् स्वत एव निवृत्तिसिद्धेः । न च तदध्ययनादेव अनु-

---

* All the mss. read प्रयुञ्जति, the plural.

१. E omits पद

२. A: आपातप्रतीति ; E: ष्वाप्रतीति

३. D: नाग्निहोत्रादत्यन्तमप्रतिपत्तिः

४. E: प्रतिपत्ति for अप्रतिपत्ति

५. A originally read पक्षप्रतिक्षेपेण and subsequently the correction was into प्रक्षेपेण ; E omits प्रति

६. D: प्रतिवाक्यमर्थविचार

७. D: विद्यानां for विधीनां

८. D: एव

९. E: विचारकत्व

१०. A: प्रयोजकत्वात्

११. D: अध्ययन

१२. D: न चैतत्कां

१३. E: तदुक्तं

१४. C D: शब्दस्य; E omits शब्द

१५. A: संकोचक ; D: संकोचप्रमाणाभावात्

१६. D omits च

१७. A: अनु ; D: अनुष्ठेयत्वात् ; E omits the portion bracketed.

१८. D inserts न

१९. D: अनधिकृत

२०. D: अनुमेय

२१. D: अनधिकृतकर्मानुष्ठानानां अप्राप्तानुष्ठानत्वात्

छेयत्वाशङ्का, अर्थावबोधपर्यन्तेऽध्ययने[1][2] ] तद्वाक्याध्ययनमेव न[3] भविष्यतीत्युक्तत्वात् । अक्षरग्रहणान्तेऽध्ययनविधौ अनधिकृतवाक्याध्ययनस्य प्रायश्चित्तजपाद्युपयोगः[4] । न चार्थावबोधं प्रायश्चित्तादिकं[5] चोद्दिश्य एको[6] विधिः संभवति । अतो नाध्ययन-विधिः अर्थावबोधफलः, किं तु अक्षरग्रहणमात्रफल एव ।

अपरे पुनराचक्षते—"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत[7]" इत्यध्यापने नियोगः प्रतीयते । स च नियोज्यमन्तरेणानुपपन्नः सन् "संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" (Pāṇini, I, iii, 36) इत्यात्मनेपदसामर्थ्यात् साध्यतया प्रतीयमानमाचार्यत्वं फलत्वेन परिकल्प्य[8] तत्कामं नियोज्यत्वेन स्वीकरोति[9] । ततश्च उपनयनाध्यापनयोः एकप्रयोगत्वावगमात्[10] '[11]अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत[12]ाचार्यकरणकामः' इति संपद्यते । तत्र[13] माणवकस्याध्यापनं प्रत्यङ्गत्वावगमात् [14]अकिञ्चित्करस्य शेषत्वानुपपत्तेः आचार्यमुपगम्याध्ययनं कुर्वन् अध्यापनं प्रति शेषत्वं प्रतिपद्यते । ततश्च स्वाध्यायाध्ययनं प्रयुञ्जानोऽध्यापनविधिः अर्थावबोधपर्यन्तं[15]मध्ययनं[16] प्रयुङ्क्ते, अध्ययनानिष्पत्तौ अध्यापनानिष्पत्तेः अध्ययनस्यार्थावबोधपर्यन्तत्वात् । [न[17] च स्वविधिप्रयुक्तमध्ययनमिति युक्तम्, अध्ययनविधेरश्रूयमाणाधिकारित्वात्[18] ।] न च प्रयुक्त्यन्तरसंभवे

---

१. D: अथ वानाधपर्यन्ताध्ययने
२. A omits अध्ययने
३. A omits न
४. C: योगात्
५. C: श्चित्त कर्म चोद्दिश्य
६. D: चोदितश्चैको
७. C D: अध्यापयेत्
८. D: परिकल्पितं
९. D: स्वरोति
१०. A C E: प्रयोगतावगमात्
११. C: अष्टवर्षे
१२. C: पयेत्
१३. D: तस्मात्
१४. D: किञ्चित्करणस्य
१५. D: पर्यन्ते
१६. C D E omit this word.
१७. C drops the portion within brackets.
१८. A. कार ;
E: कारप्रयाणं, न च

सत्यपि[1] अधिकारकल्पनायाः[2,3] प्रयोजकत्वं युक्तं[4] कल्पयितुम् । तस्मादध्यापनविधि-सामर्थ्यादेव अध्ययनमर्थावबोधपर्यन्तम्—इति ।

तत्र वदामः । भवेदध्ययनस्याध्यापनविधिप्रयुक्तता ; तथापि अध्ययनविधेः अक्षरग्रहणमात्र[5]फलत्वस्य दर्शितत्वात् तत्[6]पर्यन्तमेवाध्ययनं प्रयुञ्जानोऽध्यापनविधिः[7] तन्निर्वृत्त्यैव[8] स्वयमेव[9] निष्पत्तेः नार्थावबोध[10]पर्यन्तमध्ययनं प्रयुङ्क्ते । न चाध्यापनं[11] नित्यतया विधेयम् , वृत्त्यर्थत्वात्[12]तस्य ।

[ " [13]षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाध्यापने[14] चैव विशुद्धाच्च प्रतिग्रहः ॥
ब्राह्मणस्याधिकाः[15] प्रवचनयाजनप्रतिग्रहाः । " (Manu, X, 76)

इत्यादिस्मरणात् । अतो वृत्त्यर्थ[16]त्वादनित्योऽध्यापनविधिः ।] न ह्यनित्येन नित्य-मध्ययनं प्रयुज्येत[17], तस्याप्यनित्यत्वप्रसङ्गात् । ततश्चाचार्य[18]त्वस्य अध्यापनसाध्यत्वेऽपि[19] वृत्तिप्रयुक्ताचार[20]ग्रहणनिमित्त[21]ाचार्यत्वमेव [[22]प्रतीयते, नालौकिकमेव ।]

---

१. C omits अपि
२. D: कारि
३. C D: कल्पनया
४. E omits युक्तम्
५. D omits मात्र
६. E omits तत्
७. E drops विधिः
८. D: तन्निष्प्रयोजनस्य निष्पत्तेः
९. A: स्वयमपि
१०. D: अवभास
११. D: अध्ययनं
१२. D: तत्पूर्वत्वात् for वृत्त्यर्थत्वात्
१३. C omits the part within brackets.
१४. D: ध्यापनं नैव
१५. D: अधिकाराः
१६. A: प्रवृत्त्यर्थ
१७. C: प्रयुज्यते ; D: प्रयुञ्ज्येत
१८. D: आचार्याध्याय etc.
१९. E: अध्य......त्वेऽपि प्रतिपत्तियु-क्ताचरणनिमित्ताचार्यत्वमेव आचा-रग्रहणनिमित्तमाचार्यत्वं प्रचक्षते इति वचनात् ; अथ वा
२०. A E: आचार्य ; D: अक्षर
२१. D: प्रयुक्त for निमित्त
२२. D omits the words within brackets.

“उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥” (Manu, II, 140)

इति स्मृतावपि प्र[1]सिद्धमेव आचारग्रहणनिमित्तमाचार्यत्वमनूद्यते, ‘प्रचक्षते’ इति वचनात् । अथ वा अध्यापयितुः आचार्यसंज्ञा विधीयते, “आचार्याय गां ददाति” इत्या[2]दिविधिशेषत्वेन[3] । तस्मात् “अष्टवर्षं ब्राह्मणमुपनयीत त[4]मध्यापयीत” इति नायमध्यापनविधिः, किं तु [[5]वृत्त्यर्थत्वेन [6]प्राप्तमध्यापनमनूद्य अप्राप्तमध्ययनमेव उपनयनसहितं विधीयते ;] यथा वृत्त्यर्थत्वेन प्राप्त[7]याजनानुवादेन “ग्रामकामं याजयेत्” इति ग्रामकामस्य यागो विधीयते । तदेवं “अष्टवर्षो ब्राह्मण उपगच्छेत् आचार्यं[8] सोऽधीयीत” इत्य[9]ध्ययनविधिः । तत्र वयोविशिष्टां[10] वा जातिः जातिविशिष्टं वा वयः अधिकारिविशेषणं संपद्यते । ततश्च अध्ययनविधेरेव साधिका[11]रित्वात् अध्यापनविधेरनित्यत्वा[12]च्च नाध्यापनविधिप्रयुक्तमध्ययनम् । तस्मात् अध्ययनविधेः अर्थावबोध[13]पर्यन्तत्वाभावात् अर्थविचारस्य नाध्ययनविधिप्रयोज्यत्वलाभ[14]ः । [15]ततस्तन्निमित्तमपि न एकाधिकारित्वं संभवति ।

अथ कर्मणां परित्यागा[16]संभवात् एकाधिकारिता[17] कल्प्येत, तद[18]सत् ; “सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज” (Gītā, XVIII, 66) इति भगवद्वचनात्

---

१. D: सिद्धमक्षरग्रहणनिमित्तं
२. D omits आदि
३. E: तत्प्राप्तमध्यापनं आद्यप्राप्तमध्ययनमेव उपनयनसहितं विधीयते ।
४. C omits तमध्यापयीत
५. A omits the words within brackets.
६. D प्राप्तमध्ययनमेवोपनयनसंहृतं
७. D: प्राप्तमनूद्य
८. C: अभिधीयेत
९. D: अध्यापन
१०. A E: विशिष्टया ; all omit जातिः
११. D: कारि
१२. D omits च
१३. D: भास for बोध
१४. D adds इति
१५. C omits ततः ; D reads अतः
१६. D: त्यागाभावात्
१७. A E: कारत्वादध्यापनं कल्प्येत ; D: कारत्वं
१८. A C: तदप्यसत्

[ सर्वकर्मपरित्यागोपपत्तेः । ननु " संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् " (Gītā, XVIII, 1) इति पृष्टो भगवान् ] " काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः" (Gītā, XVIII, 2) इत्युपक्षिप्य तत्रैव कर्मणां अनुष्ठानपरित्यागयोः विप्रतिपत्तिं प्रदर्श्य " निश्चयं शृणु मे तत्र " (Gītā, XVIII, 4) इति स्वमतत्वेन " यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् " (Gītā, XVIII, 3) इत्याह ; तस्मात् उपक्रमानुसारेणोपसंहारेऽपि काम्यकर्मपरित्याग एव भगवतोऽभिमत इति गम्यते । तदेतत् तत्त्वदर्शनविद्वेषव्याकुलचेतस्तया पूर्वापरपर्यालोचनाक्षमैः उत्प्रेक्षितम् । यावता भगवतैव तत्रैवाध्याये " स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः " (Gītā, XVIII, 46) इति कर्मप्रयोजनं परिसमाप्य सिद्धिं प्राप्तस्य शमदमादीनि साधनानि विधाय ज्ञानादेव मुक्तिमुक्त्वा " सर्वगुह्यतमं भूयः " (Gītā, XVIII, 66) इति प्रशस्य सर्वकर्मसंन्यासं ऐकात्म्यविज्ञाननिष्ठाङ्गत्वेन " सर्वधर्मान् परित्यज्य " (Gītā, XVIII, 66) इत्याह । तथा च तत्र तत्र ज्ञाननिष्ठस्य कर्मणि प्रयोजनाभावं दर्शयति भगवान्

" यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टः तस्य कार्यं न विद्यते ॥ " (Gītā, III, 17)

इत्यादि । तथा चापस्तम्बोऽपि समस्तलौकिकवैदिककर्मतत्साधनपरित्यागपूर्विकामेवात्मज्ञाननिष्ठामाह "तस्य मुक्तमाच्छदनं विहितम् , सर्वतः परिमोक्षमेके, सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्" (Āp. Dh. Sū., II, xxi,

१. D omits the part bracketed.
२. A: तत्त्वादर्शन
३. C: व्याकुलीकृत ;
D: व्याकुलितस्तया
४. C: साधनत्वेन
५. C: प्रशंसनमभिधाय ;
D: प्रदर्श्य
६. C omits one तत्र

11—13) इति । ननु स्वयमेव "तच्छास्त्रैर्विप्रतिषिद्धम्[1]" (Ibid., 15) इति सर्वकर्मसंन्यासं दूषयति । नैतद्युक्तम्; "बुद्धेः क्षेमप्रापणम्" (Ibid., 14) इत्यात्मा[2]न्वेषणमात्रेण क्षेमप्रापणस्यानन्तरप्रकृतस्य मनननिदिध्यासनशास्त्रवि[3]प्रतिषे[4]धाभिधानात्; तत्रैव च[5] दूषणान्तरमाह "बुद्धे[6] चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत" (Ibid., 16) इति । अतो न पूर्वोक्तसंन्यासस्य[7] शास्त्रविप्रतिषेधो युक्तिविरोधो वात्र[8] विवक्षितः । न च यावज्जीवश्रुतिविरोधात् कर्मपरित्यागस्मृते[9]रप्रामाण्यमिति[10] शङ्कनीयम्; श्रुत्यैव आत्मज्ञानशेषत्वेन कर्मपरित्यागस्य दर्शितत्वात्, भिन्नविषयत्वाच्च अनुष्ठानपरित्यागशास्त्रयोः 'अविरक्तविषयं अनुष्ठानशास्त्रं विरक्त[11]मुमुक्षुविषयं परित्यागशास्त्रम्' इति । श्रुतिश्च "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्" (Bṛh., IV, iv, 23) इत्याह । तत्र प्रतिषिद्धानां तावत् प्रतिषेधशास्त्रादेव निवृत्तिः । काम्यानां तु[12] विरक्तत्वादनारंभः । लौकिकानां च अविहिताप्रतिषिद्धानां शान्त इति बाह्यकरणनिर्व[13]र्त्यानां प्रतिषेधः[14]; दान्तः इत्यन्तःकरणनिर्वर्त्यानां[15] प्रतिषेधः[16] । परिशेषात् शास्त्रप[17]रिप्रापितानां नित्या[18]नां [उप[19]रतशब्देन परित्यागः[20]

१. C: विप्रतिषिद्धबुद्धेः । आपाततो ज्ञातेऽप्यात्मनि क्षेमप्रापणं मोक्ष इति पूर्वपक्षसूत्रार्थः । तत्र सिद्धान्तसूत्रम् "तच्छास्त्रैर्विप्रतिषिद्धम्" इति । तदापातदर्शनमात्रेण क्षेमप्रापणे श्रवणमनननिदिध्यासनविधायि शास्त्रं विरुद्धमिति श्रवणादिपूर्वकसाक्षात्कारादेव मोक्ष इति सिद्धान्तसूत्रार्थः । अतः संन्यासस्य शास्त्रविप्रतिषिद्धत्वाशङ्का तद्विधायकशास्त्रानभिज्ञकृता न आपस्तंबसूत्रेऽवतरतीति भावः । मिति सर्वकर्मसंन्यासं दूषयतीति चेत्, नैतद्युक्तम् । etc.

२. C: इत्यात्मन्येवेक्षण

३. D omits वि

४. E: षेधानां तत्रैव

५. C D omit च

६. C D: बुद्धेः

७. D: संन्यासशास्त्र

८. D: तत्र

९. D E: श्रुतेः

१०. A: अप्रामाण्यमाशङ्कनीयम्; D: अप्रामाण्यं शङ्कनीयम्

११. D omits विरक्त

१२. A C: च for तु

१३. A: निवर्त्यानां; D: करणाभिवर्त्यानां

१४. A C E: षेधात्

१५. A: निवर्त्यानां

१६. A inserts this word later; missing in C D E.

१७. C omits परि; D: शास्त्रस्य प्रापितानां

१८. A omits नित्यानां

१९. D: उपरति; E omits the part in brackets.

२०. A: त्यागसिद्धिः; D: परित्यागः प्रसिद्धः

सिद्धः। तदेवं[1] श्रुतिस्मृत्योः कर्मपरित्यागस्य सिद्धत्वात् अनुष्ठानपरित्यागशास्त्रयोश्च विरक्ताविरक्तविषयत्वेन व्यवस्थिततत्त्वात्[2] आत्मज्ञानाङ्गत्वेन[3] सर्वकर्मसंन्यासोऽवगतः[4]। तमात्म]—ज्ञानाधिकारिणं प्रति अथर्वणे

"सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद्बुधः।
यदक्षरं परं ब्रह्म तत्सूत्रमिति कल्पयेत्[5]" ॥ (Brahmopaniṣad)

इति श्रवणात्, "पुराणानि परित्यज्य नवानि गृह्णीयात्" इति पुनर्यज्ञोपवीत-ग्रहणवचनस्य कुटीचकादि[6]विषयत्वात्; [ज्ञान[7]निष्ठस्य च] "ज्ञानशिखिनो ज्ञाननिष्ठा[8]ः ज्ञानयज्ञोपवीतिनः" (Brahmop.) इति ज्ञानव्यतिरिक्तशिखायज्ञोपवीतप्रतिषेधात्, श्रुत्यन्तरे च[9]"अथ परिव्राट् विवर्णवासा मुण्डः[10] उदरपात्र्यरण्य[11]निष्ठो[12] भिक्षार्थी ग्रामं प्रविशेत् सायं प्रदक्षिणेन अविचिकित्सन् सार्ववर्णिकं भैक्षचरणं[13] अभिशस्तपतितवर्जं[14] यज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमाददीत" (Cp. Jābāla, 5, 6; Āruṇeya, 4) इति लिङ्गविशेषावगमात्, परमहंसपरिव्राजक एव ज्ञाननिष्ठायामधिकारी इति गम्यते। अन्येषामाश्रमिणां शुद्धान्तःकरणतया प्रत्यक्प्रवणानां जन्मान्तरे संन्यासः कल्प्यते[15], [यथा[16] प्रथमाश्रमे एव वैराग्यदर्शनात् जन्मान्तरे यज्ञादिसंपत्तिः[17] कल्प्यते[18]।]

---

१. D: भवेदेवं
२. A: तत्त्वम्
३. D: ज्ञानाङ्गत्वे
४. A: अवगतं
५. C omits this word; D: धारयेत्
६. C: कुटिचकादि
७. A D E drop the words in brackets.
८. C drops this word.
९. C: श्रुत्यन्तरं च
१०. D: विवर्णाचार्यासा मुण्डो
११. C D: पात्रोऽरण्य
१२. All except D: नित्यो
१३. C: भैक्षं; D: भैक्ष्यचरणं
१४. D: पतितं वर्जयन्
१५. D: कल्पते
१६. C omits the portion in brackets.
१७. D: सम्बन्धः
१८. D: कल्पते

[1]अविरक्तानामपि [2]स्व्योत्यादि[3]प्रयोजनान्तरानपेक्षाणां अपर्युदस्तत्वात् कल्मषनिबर्हणद्वारेण [4]अद्वैतवासनाद्वारेण च वेदान्तश्रवणमुपकरोत्येव[5]। न हि तेषामस्मिन्नेव जन्मनि निर्विचिकित्सं विज्ञानमुद[6]यमासादयति, अधिकारपौष्कल्याभावात्।

यत्पुनरुक्तम् '"ब्रह्मचर्यादेव प्रव्रजेत्" (Jābāla, 4) इत्यादिशास्त्रं अन्ध-पङ्ग्वादि[7]वि[8]षयं न विरक्तविषयम्' इति, तद[9]युक्तम्; आश्रमान्तरधर्मासमर्थानां [10]अन्धादीनां संन्यासधर्मेऽप्यसमर्थत्वात्। अथ[11] तत्र एकदेशविक[12]ल्पमप्यनुष्ठीयते, समानमेतद[13]ाश्रमान्तरधर्मेऽपि। अपि च "ब्रह्मचर्यं समाप्य गृही भवेत् गृहात् वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" (Jābāla, 4) इत्यधिकृतानां संन्यासमुक्त्वा "अथ पुनः[14] अव्रती वा व्रती वा" (Jābāla, 4) इत्यादिना अनधिकृतानां पृथगेव संन्यासमाह।

यदप्युक्तम् 'ऋणापाकरणस्यावश्यंभावित्वा[15]त् कर्मपरित्यागो न प्राप्यते' इति, तद[16]प्ययुक्तम्, विरक्ताविरक्तविषयत्वेन अनुष्ठानपरित्यागयोः विभाग[17]स्य दर्शितत्वात्। अतो युक्त एवात्मज्ञानाङ्गत्वेन सर्वकर्मसंन्यासः। तस्मात् भिन्नाधिकारं शास्त्रं इति सिद्धम्।

इति तत्त्वशुद्धौ आत्मज्ञानाधिकारिनिरूपणप्रकरणम्।

---

१. C: तद्बद्विरक्तानामपि
२. D omits स्व्यात्यादि
३. D: प्रयोजनान्तरापेक्षणामपर्युदासत्वात्
४. D omits अद्वैतवासनाद्वारेण
५. D omits एव
६. D: मुदनासादयति
७. D: शास्तिमङ्गलवादिविषयं इतिः
८. C omits विषयं
९. A: तदेतदयुक्तं; D: तदप्ययुक्तं
१०. D omits this word.
११. C: अथात एकदेश
१२. D: विकल्पमनुष्ठीयते
१३. C: मेव नदाश्रमा
१४. A E insert एव
१५. C: भावितत्वात्
१६. E omits तदप्य
१७. A D E: विभागेन

## ॥ ज्ञाने विधिनिराकरणं द्विचत्वारिंशम् ॥

दृष्ट्वा[1] विशिष्टफलसाधनकर्मनिष्ठं
नानाविधं विधिमुशन्ति[2] यदीयबोधम् ।
संसारपाशवशगा विवशा विधेयं
तं नौमि विष्णुमविधेयस[3]तत्त्वबोधम् ॥

सं[4]प्रति विचार्यते 'किं ब्रह्मज्ञानं विधेयम्? आहो[5]स्विदविधेयम्?' इति । ननु ब्रह्मज्ञानं विधेयमुत्पश्यामः, तत्र विधिसम्बन्धोपलब्धेः । तथा[6] हि । "आत्मा वा अरे द्रष्टव्यः" (Bṛh., II, iv, 5) "आत्मानमेव लोकमुपासीत" (Bṛh., I, iv, 15) "आत्मेत्येवोपासीत" (Bṛh., I, iv, 7) "विज्ञाय प्रज्ञां कुर्वीत" (Bṛh., IV, iv, 21) इत्यादावात्मज्ञाने नियोगो दृश्यते । नियोगाच्च मोक्षः स्वर्गादिव[7]त् भविष्यति । न हि नियोग[8]व्यतिरेकेण वैदिकः कश्चित्साध्यसाधनसम्बन्धो भव[9]ति, नियोगस्यैव[10] वेदार्थत्वात् । ततश्च 'शमद[11]मादिसाधनसंपन्नो भूत्वा मोक्षकामो वेदान्तश[12]ब्दैः आत्मज्ञानं कुर्यात्' इति वाक्यार्थः संपद्यते । तस्मात् ज्ञानादेव मोक्षाभ्युपगमेऽपि विधीयमान[13]ज्ञानादेव मोक्षः—इति केचिदाचक्षते ।

[14]तत्रेदमभिधीयते[15] । न तावत् ज्ञाने विधिः संभवति; अशक्यत्वाद[16]नर्थक-

---

१. C E: दृष्टा
२. E: विधिमुशं न यदीय
३. C omits स
४. C drops संप्रति विचार्यते
५. C: उत न इति
६. C omits तथा हि
७. D: स्वर्गाद्भविष्यति
८. C: नियोगमन्तरेण
९. C: संभवति
१०. D omits एव
११. C E: शमादि
१२. A: शास्त्रैः, a subsequent correction.
१३. D: विधीयत एव ज्ञानादेव
१४. C: अत्र; E: तत्राभिधीयते
१५. D: प्रतिविधीयते
१६. D omits अनर्थकत्वाच्च

त्वाच्च । तथा हि । ज्ञानविषयेऽवगते किं वानवगते ज्ञाने[1] विधिरभ्युपगम्यते ? [ [2]न तावदवगते ] वि[3]षये ज्ञानविधिः संभवति ; विधेः प्रागेव ज्ञानस्य सिद्धत्वात् । नाप्यनवगते वि[4]षये ज्ञानविधिः ; विषयानवगमे तद्विषयज्ञानस्याप्यनवगमात् , विषयाधीननिरूप[5]णत्वाच्च ज्ञानस्य । [6]न ह्यनवगतेऽर्थे विधिः संभवति । स्यान्मतम् ' परोक्षरूपेणावगते विषये तत्रा[7]परोक्षज्ञानं विधीयते, प्रतिब[8]द्धफलेन वा विज्ञानेन विषयावगमे सति अप्रतिब[9]द्धफलं वि[10]ज्ञानं विधीयते ' इति । तत्र वक्तव्यम् ' किं[11] भवत्पक्षे शब्दात् परोक्षमेव[12] विज्ञानं जायते, उतापरोक्ष[13]म् , आहोस्विदुभयम् ?' इति । य[14]द्याद्यः कल्पः, तत्रा[15]परोक्षज्ञानसामग्री वक्तव्या । शब्दस्तावत्परोक्षज्ञानहेतुः । न चेन्द्रियजन्यं मनोमात्रजन्यं वा आत्म[16]तत्त्वं गोचरयितुमलम् , रूपादिहीनत्वात् ; "यच्चक्षुषा न पश्यति" (Kena., 6) " यन्मनसा न मनुते " (Kena., 5) इत्यादिश्रुते[17]श्च । नापि शाब्दादेव [18]ज्ञानात् अभ्यस्यमानात् [19]अपरोक्षविज्ञानं सं[20]भवति ; परोक्षज्ञाने सहस्रशोऽभ्यस्यमानेऽपि तत्त्व[21]तो विषयापरोक्ष्यादर्शनात् , प्रोषितपु[22]त्रादेः आपरोक्ष्यस्य

---

१. All except D give ज्ञानविधि ; D: ज्ञाने विधिरित्यभ्युपगम्यते

२. E drops the words in brackets.

३. D omits विषये

४. D: ज्ञानविषये

५. E: निरूपणाच्च

६. C: नानवगतविषये विधिःसंभवति

७. D: तत्त्वापरोक्ष

८. A: बन्ध

९. A: बन्ध

१०. D omits वि

११. A omits किं

१२. A omits एव

१३. D: अपरोक्षः

१४. C: यदाद्यः ; D: यथार्थः

१५. C: तदापरोक्ष

१६. D: आत्मानं

१७. C: श्रुतिश्च

१८. C D: विज्ञानादभ्यस्यमानात् ; D omits वि; A also originally seems to have had अभ्यस्यमानात् ; later it was changed to अज्ञस्यमानात् and subsequently scored out ; E omits अभ्यस्यमानात्

१९. E adds अस्य

२०. C omits सं

२१. E: तत्त्वतोऽपि विषयापरोक्ष्यज्ञानहेतुर्न वा इन्द्रियजन्यं मनोमात्रजन्यं वा विज्ञाननिदर्शनात् प्रोषितपुत्रादेः etc.

२२. D: पुत्रापरोक्ष्येऽपि

वि[1]भ्रममात्रत्वात् । न च ज्ञानाभ्यासस्य प्रमाणका[2]रणत्वं प्रसिद्धम्[3] । तस्मान्नाद्यः कल्पोऽवकल्पते । नापि[4] द्वितीयः, शब्दस्यापरोक्षज्ञानहेतुत्वे सति प्रथमं ब्रह्मणि परोक्षज्ञानकारणाभावात् प्रतिप[5]त्तिविध्यनुपपत्तेः । अथ 'कार्यानुमाने[6]न कारणे परोक्षतयाऽवगते तत्रापरोक्षज्ञानं विधीयते' इति शङ्केथाः, तदप्यचारु ; [7]कार्यात्कारणानुमानस्य प्रधाना[8]दावपि तुल्यत्वात् । अत[9]ः 'परोक्षावगते ब्रह्मणि अपरोक्षज्ञानं विधीयते' इत्यनुपपन्नम् । अथ 'प्रतिब[10]द्धंफ[11]लंविज्ञानेनावगते ब्रह्मणि अप्रतिब[12]द्धफलं विज्ञानं [13]विधीयते', तर्हि प्रतिबन्धनिवृत्तेरेव साध्यत्वात् तदुद्देशेन श्रवणाद्येव[14] विधातव्यम् ; निवृत्ते च प्रतिबन्धे शब्दादेव स्वतःसिद्धसामर्थ्यात् फलपर्यन्तं वि[15]ज्ञानमुदयमा[16]सादयति ; त[17]त्र कुतो ज्ञानस्य विधिसम्बन्धः ?

यत्पुनरुक्तम् 'नियोगस्यैव वेदार्थत्वात् नियोगमन्तरेण नास्ति कश्चिद्वैदिकः साध्यसाधनसम्बन्धः' इति, तदपि न घ[18]टमानपद्धतिमध्या[19]स्ते ; नियोगस्वरूपानिरूप[20]णात् प्र[21]माणासंभवाच्च । तथा हि । न तावत् कालत्रयान[22]वच्छिन्नत्वं नियोगस्य लक्षणम्, काले व्यभिचारात् । अथ 'कालादतिरिक्तत्वे सति' इति विशेष्येत, तदापि गगनकुसुमादेरपि तुल्यमेवेदं लक्षणम् । न च कृतिव्याप्यो नियोगः,

---

१. D omits वि
२. E: करणत्वं
३. C omits प्रसिद्धम्
४. D omits अपि
५. D: प्रतिप्रतिविद्ध्यानुपपत्तेः
६. E: माने कारणपरोक्षतया
७. D: कारणादनुमानस्य
८. E: प्रधानाभावेऽपि
९. D omits अतः
१०. E: बन्ध
११. D: फलावगते ब्रह्मणि
१२. E: बन्धं विज्ञानं
१३. D: विधाय कार्यत न क्षिप्रतिबन्धनिकृतेरेवः
१४. D: देरेव निधातव्यम्
१५. D: विज्ञानमधिरोहति
१६. E: आरोहति
१७. D: तत्कुतो
१८. C: घटते
१९. A E: अध्यारोहति
२०. D: पणत्वाच्च
२१. C: प्रामाण्या
२२. C: विच्छिन्नत्वं

भावार्थे[1] व्यभिचारात् । नापि कृत्युद्देश्यत्वे सति कृतिव्याप्यः, फले व्यभिचारात् । लोके फलस्यैव कृतिं[2] प्रति साध्यत्व[3]दर्शनात् । नापि साध्यैकस्वभावो नियोगः, प्रागभाववस्तु व्यभिचारात् । नापि प्रवर्तक[4]लक्षणः, इष्टसाधनस्यैव प्रवर्तकत्वात् । तस्माद्दुर्निरूपो नियोगः ।

न च नियोगे किञ्चित्प्रमाणमस्ति । न तावत् प्रत्यक्षं संभवति[5] ; नियोगस्य कालत्रयानवमृष्टत्वात्[6], वर्तमानग्राहित्वाच्च[7] प्रत्यक्षस्य । नाप्यनुमानम्, तस्यापि त्रैकाल्यवस्तुविषयत्वात् । नापि शब्दः, सम्बन्धग्रहणासंभवात् अगृहीतसम्बन्धस्य बोधकत्वानुपपत्तेः । ननु—अगृहीतसम्बन्धस्यापि शब्दस्य वेदे प्रसिद्धार्थ[8]पदसमभिव्याहारात् प्रमाणान्तरानवगतार्थाभिधायकत्वमुपपद्यते ; तथा हि ; "स्वर्गकामो यजेत" इति यागस्य स्वर्गसाधनता प्रतीयते ; न हि देशान्तरकालान्तरोपभोग्यस्वर्गं प्रति क्षणवि[9]ध्वंसिनो यागस्य साधनत्वं संभवति ; ततश्च लिङादिशब्दाः लोके क्रियाकार्ये एव व्युत्पन्नाः सन्तः स्वर्गसाधनत्वविरोधि क्रियांशं[10] विहाय कार्यतामात्रोपादानेन क्रियात्मकं कार्यं[11] स्वर्गसाधन[12]समर्थं यागा[13]न्वितमेवाभिदधति ; ततश्च यागसाध्यो नियोगः 'स्वर्गकामो यजेत' इत्यादिवाक्यप्रमाणकः—इति । तत्र वक्तव्यम् 'किं[14] पदार्थस्यैव नियोगस्य संसर्गवद्वाक्येनैव प्रतीतिरभिधीयते, किं वा पदार्थीभूत[15]स्यैव वाक्येन प्रतीतिः ?' इति । न[16] तावदाद्यः कल्पः, सकलवैदिक-

---

१. E: ...वार्थे
२. C: कृतिसाध्यत्वप्रधानत्वदर्शनात्
३. D also adds प्रधानत्व
४. A: प्रवर्तनालक्षणः
५. D adds प्रमाणं before संभवति
६. C: त्रयानच्छिन्न ;
E: कालस्यानवमृष्टत्वात्
७. A C D: ग्राह्यत्वाच्च
८. D: प्रसिद्धार्थसंभिन्नव्यवहारात्
९. D omits वि
१०. D: क्रियां विहाय
११. C: कार्यांशं ;
D omits this word.
१२. D: स्वर्गादि
१३. D: नियोगाभिधायिनमेव
१४. A omits किं
१५. D: पदार्थभूत
१६. D: यथाद्यः कल्पः

शब्दानां नियोगान्विताभिधायित्वात्[1] । न[2] च पदानामन्विताभिधानात्[3] प्रागेवान्वयिनां[4][5] अनन्वितस्वरूपस्मरणमन्तरेण[6] तदन्विताभिधानमवकल्पते, सम्बन्धविशेषणत्वात्[7] सम्बन्धिनः[8] । न चागृहीतविशेषणविशेष्ये[9] बुद्धिः संभवति । न च वाच्यम् ‘ संसर्गवत् नियोगस्यापि[10] वाक्यादेव प्रतीतिः स्यात् ’ इति, नियोगसंसर्गयोर्वैषम्यात् । संसर्गो हि [संसर्गिभिर्विशेष्यमाणः[11] पूर्वक्षणप्रतिपन्नेषु संसर्गिषु तैर्विशेषितः पश्चात् प्रतीतिगोचरतामावहतीति[12] युक्तम् । नियोगः पुनः] संसर्गविशेषणभूतः[13] संसर्गावगमात् प्रागेव स्फुरणमन्तरेण न[14] संसृष्टबुद्धिमधिरोहति । नापि द्वितीयः, शब्दस्य[15] तत्र[16] सम्बन्धग्रहणानुपपत्तेः । न चागृहीतसम्बन्धमेव पदं पदार्थे[17] स्मृतिं जनयितुमीष्टे । न च सम्बन्धग्रहणात् प्रागेव सम्बन्धिनः[18] प्रमाणान्तरसिद्धिमन्तरेण[19] सम्बन्धग्रहणं संभवति । न च[20] नियोगे प्रत्यक्षादि प्रमाणं संभवतीत्युक्तम् । न च लोकेऽपि लिङादिशब्दानां कार्यरूपे व्युत्पत्तिः, प्रवर्तकमात्रे सम्बन्धग्रहणात्, इष्टसाधनविज्ञानस्यैव प्रवर्तकत्वात् । नापि यागस्य स्वर्गसाधनतानुपपत्त्या[21] नियोगकल्पना युक्ता, अर्थापत्तिगम्यत्वेन नियोगस्याशाब्दत्वप्रसङ्गात् । नापि तयैवानुपपत्त्या[22] लिङादिशब्दवाच्यत्वं[23] कल्पनीयम्[24] ; [क्षणप्रध्वंसिनो[25]

---

१. C D: धानात्
२. D omits न च
३. C D omit पदानामन्विताभिधानात्
४. E: प्रागेवा...वयिनामनः...तस्वरूप
५. D: अन्वयिनमन्तरेण
६. C: स्फुरण
७. D: विशेषणत्वात् ; E: विशेषणात्
८. A: सम्बन्धिनोः
९. A: न वा
१०. D omits अपि
११. E omits the part bracketed.
१२. A D E: आचरतीति
१३. C omits संसर्गविशेषणभूतः
१४. A drops न
१५. E: शब्देन
१६. C E omit तत्र
१७. C: पदार्थस्मृतिं
१८. C: सम्बन्धिनं
१९. C: सिद्धमन्तरेण
२०. E omits च
२१. C: साधनान्यथानुपपत्त्या
२२. E: तयोरेवानुप
२३. D: शब्दस्य वाच्यत्वं
२४. D: कल्प्यम् ।
२५. A E omit this portion in brackets.

यागस्य कालान्तरे सेवादिफलवत् परमेश्वरप्रसादादेव फलोपपत्तेः,] भावार्थस्यैव इष्टसाधनत्वेन लोके लिङादिशब्दवाच्यत्वप्रसिद्धेः, ईश्वरस्य[1] च स्वरूपेण फलदातृत्वेन[2] च वेदान्त[3]बलात् व्याप्तिबलाच्च प्रसि[4]द्धेः। तस्मात् गगननलिनप्रख्यो नियोगः।

य[5]त्तूक्तम् '"आत्मा वा अरे द्रष्टव्यः" (Bṛh., II, iv, 5) इत्यादिना ज्ञाने[6] विधिः[7] श्रूयते' इति, तदप्यसत्; उ[8]क्तेन न्यायेन ज्ञानस्याविधेयत्वे[9] सति अनुभवपर्यन्तं शब्दसा[10]मर्थ्यजन्यमेव विज्ञानं 'द्रष्टव्यम्' इत्यनू[11]द्य [12]तद्विषयगतासंभावनाविपरीतभावनादिप्रतिबन्धनिवृत्तये श्रवणादिविधिपरत्वाद्वाक्यस्य। तथा "आत्मेत्येवोपासीत" (Bṛh., I, iv, 7) इत्यादि एवकारेण संयोगात् अन्योपासननिवृत्तिपरमेव। अन्यथा आत्मोपासनविधिपरं अन्यनि[13]वृत्तिपरं च इति वाक्यं भिद्येत। तच्चायुक्तम्, जाग्रतः पुरुषस्य स्वभावसिद्धमात्मदर्शनं उपासनशब्देनानूद्य अ[14]न्यनिवृत्तिपरत्वेन एकवाक्यत्वसंभवे सति। तस्मान्न ब्रह्मज्ञाने विधि[15]गन्धोऽपि संभवति इति सिद्धम्।

इति तत्त्वशुद्धौ ज्ञाने विधिनिराकरणप्रकरणम्।

---

१. A D omit च
२. D: दातृत्वस्य
३. D E: वेदान्तप्रामाण्यात्
४. C: प्रसिद्धम्; E: प्रसिद्धिः; E here introduces the part left out earlier.
५. C: यदुक्तम्; E omits it.
६. C: ज्ञानविधिः
७. D: नियोगः
८. E: उत्तरन्यायेन
९. D: विधेयत्वे
१०. D omits सामर्थ्य
११. C D: अनूद्यते
१२. C: द्रष्टव्यविषयगत
१३. D omits निवृत्ति
१४. C omits अन्य
१५. E: विधिनार्थोऽपि

## ॥ श्रवणादिसाधननिरूपणं त्रिचत्वारिंशम् ॥

यस्याहुरेकस्य विभूतिभेदा-
निदं जगत् जीवम[1]पीश्वरं च ।
परावर[2]ज्ञाः श्रुतिकोविदास्तं
नमामि नारायणमादरेण ॥

अधुना 'किं[3] श्रवणमनन[4]सहितनिदिध्यासनं अनुभवपर्यन्तं ज्ञानं प्रति कारण[5]त्वेन विधीयते, किं वा श्रवणमेव मनननिदिध्यासनाभ्यामुपबृंहितम्?' इति चिन्त्यते। तत्र केचित् निदिध्यासन[6]प्राधान्यं मन्यन्ते। तथा हि—श्रवणेन वेदान्तवाक्यानां एकरसे ब्रह्मणि शक्तितात्पर्यविचारलक्षणेन ब्रह्मस्वरूपावगमे सति तत्रैवासंभावनाविपरीतभावनानिरा[7]सितर्कलक्षणेन म[8]ननेन प्रतिबन्धनिरासे च[9] सिद्धे पश्चात् वाक्यार्थ एवैकाग्रतालक्ष[10]णनिदिध्यासनं सं[11]पद्यते। ततश्च निदिध्यासनप्राधान्ये सति श्रवणमननयोः तत्स्वरूपोपकार[12]दृष्टद्वारेण अङ्गत्वमुपपद्यते। श्रवणप्राधान्ये तु मनननिदिध्यासनयोः श्रवणा[13]त्पराचीनतया स्वरूपोपकारासंभवात् अदृ[14]ष्टद्वारेण अङ्गत्व[15]माश्रयणीयम्। तच्चायुक्तं दृष्टद्वारेण सम्[16]बन्धसंभवे सति। अपि च श्रव[17]णं नाम

---

१. D: जीवनमीश्वरं
२. D: परात्परज्ञ
३. A E omit किं
४. D: सहितं
५. E drops कारणत्वेन
६. C: सनं प्रधानं
७. D: निरास
८. E omits मननेन
९. D omits च
१०. D: लक्षणं
११. A: पश्यते ;
E omits it.
१२. All except D give अदृष्ट
१३. C: श्रवणपराधीनतया
१४. E: अदृष्टत्वद्वारेण
१५. E: अङ्गत्वमात्रमाश्रयणीयम्
१६. A omits सम्बन्ध
१७. A: एज्ञनाम ;
E: अपि च ज्ञानशक्तितात्पर्य

शब्दशक्तितात्पर्यविचारैः[1] ; [स[2] च न्यायविशेषत्वात् न[3] स्वयमेवानुभवपर्यन्तं विज्ञानं जनयति ; किं[4] तु शब्द एव शक्तितात्पर्यविचार ]-सहकृतः तद्धेतुरिति वाच्यम् । तन्न[5] संभवति, शब्दस्य परोक्षविज्ञानहेतुत्वात् । न खलु लोके शब्दोऽपरोक्षविज्ञानहेतुः क्वचित् दृष्टपूर्वः । न च लोके शब्दस्य अदृष्टमेव सामर्थ्यं वेदे कल्पयितुं शक्यम्, अतिप्रसङ्गात् । अतः श्रवणमननसंस्कारसचिवमन्तःकरणं एव एकाग्रतालक्षणनिदिध्यासनोपेतं अनुभवपर्यन्तं विज्ञानं जनयति इति युक्तमाश्रयितुम्[6] ; मनसः परोक्षापरोक्षज्ञानसाधारणत्वात् । तथा च लिङ्गादि[7]सहितं मनः परोक्षज्ञानकारणभावं[8] प्रतिपद्यते ; इन्द्रियोपेतं पुनरपरोक्षज्ञानकारणं इति । न चैतावता ब्रह्मणः औपनिषदत्वहानिः, शब्दादेव परोक्षावगते ब्रह्मणि अन्तःकरणादपरोक्षानुभवा[9]भ्युपगमात् । श्रुतिश्च[10] शब्दस्य इव मनसोऽपि ब्रह्मणि प्रवृत्तिं दर्शयति "मनसैवेदमाप्तव्यम्" (Katha, IV, 11) "मनसैवानुद्रष्टव्यम्" (Bṛh., IV, iv, 19) "दृश्यते त्वग्र्यया बुद्ध्या" (Katha, III, 12) इत्याद्या[11] । "यन्मनसा न मनुते" (Kena, 5) "अप्राप्य मनसा सह" (Taitt., II, iv, 2) इत्यादि पुनः असंस्कृतान्तःकरणविषयम् । तस्मात्[12] श्रुत्यन्तःकरणयोः [[13]उभयोरपि ब्रह्मणि प्रवृत्तिदर्शनात् इत्थं व्यवस्था युक्ता आश्रयितुम् 'शब्दः प्रथमं ब्रह्मणि परोक्षज्ञानं जनयति ; श्रवणादिसंस्कृतमन्तःकरणं पुनः] एकाग्रतायुक्तं तत्रैवापरोक्षानुभवं[14] जनयति' इति । तस्मात् अपरोक्षानुभवं प्रति कारणभूतमनोधर्मत्वात् एकाग्रतालक्षणनिदिध्यासनस्यैव[15] प्राधान्यं युक्तम्—इति ।

---

१. A: विचार्यैरः
२. C omits the part in brackets.
३. A: न च स्वयमेव
४. D omits from किं तु up to and including जयनति 5 lines below.
५. E: तच्च न
६. D omits आश्रयितुम्
७. A E: लिङ्गादि
८. A E: कारणाभावं
९. A: णादप्यपरोक्ष
१०. C omits च
११. C adds स्मृतिश्च
१२. D omits तस्मात्
१३. E drops the part within brackets.
१४. D: अपरोक्षज्ञानं
१५. A D: निदिध्यासनस्य तस्यैव

तत्र [१]ब्रूमः। न तावत् मनसो ब्रह्मणि फलपर्यन्तविज्ञानकारणत्वं संभवति; इन्द्रियादिनिरपेक्षस्य [२]प्रमाणैकारणत्वाभावात्, इन्द्रियादीनां [३]च ब्रह्मणि प्रवृत्त्यसंभवात्। न चाप्रमाणविज्ञानेन ब्रह्मण्यज्ञाननिवृत्तिः संभवति, प्रमाणैकनिवर्त्यत्वात्तस्य। "मनसैवेदमाप्तव्यम्" (Katha, IV, 11) इत्यादिना शब्दस्यैवापरोक्षानुभवहेतोः सहकारि चित्तैकाग्र्यमु[४]च्यते। ततश्च [५]केवलमनसो ब्रह्मणि प्रवृत्त्यसंभवात् न [६]परोक्षापरोक्षज्ञानहेतुतया [[७]शब्दान्तःकरणयोः व्यवस्था परिकल्पनीया। शब्दः [८]पुनः "तं त्वौपनिषदं पुरुषम्" (Bṛh., III, ix, 26) "वेदान्तविज्ञानसुनिश्चितार्थाः" (Muṇḍ., III, ii, 6) इत्यादौ ब्रह्मानुभवहेतुतया] अवगतः अपरोक्षज्ञानं जनयति। यज्ञादिनिबर्हितकल्मषस्य प्रथमत एव शब्दादपरोक्षज्ञानं ब्रह्मणि समुत्पन्नमपि कञ्चित्कालं प्रति[९]बद्धफलं तिष्ठति। यावदस्य शमदमादिसाधनेन अन्तःकरणबहिःकरणजन्यविपरीतचेष्टा न शाम्यति [१०]तावत् श्रवणेन शब्दशक्तितात्पर्य[११]निरूपणलक्षणेन मननेन च असंभावनाविपरीतभावने निरस्य चित्तैकाग्रतापूर्वं अवधारितशक्तितात्पर्यशब्देन "अहं ब्रह्मास्मि" (Bṛh., I, iv, 10) इत्यात्मानं प्रतिपद्यते। निवृत्ते तु [१२]प्रतिबन्धे तदेव शाब्द[१३]ज्ञानं अनुभव[१४]पर्यन्तं [१५]सत् अशेषा[१६]ज्ञानं तत्कार्यं च प्रमाणजन्य[१७]त्वात् निर्लेपं निवर्तयति इति युक्तम्।

---

१. A E: तत्र वयं ब्रूमः

२. D: कारणसंभवः इति;
D: प्रमाकरणत्वासंभवात्

३. C omits च

४. D. उक्तवा

५. A: केवलस्य

६. A omits अपरोक्ष

७. C omits the part bracketed, but introduces it later.

८. E omits पुनः

९. A: बन्ध

१०. A E: यावच्च श्रवणेन

११. A: तात्पर्यमवधार्य मननेन;
D E: तात्पर्यमननेन

१२. C D: फलप्रतिबन्धे

१३. A D: शब्दज्ञानं

१४. A: फलपर्यन्तं

१५. C introduces here, the portion omitted earlier.

१६. A C: अशेषाज्ञानतत्कार्यं, omitting च

१७. C: प्रमाणजन्यतत्त्वनिर्णययुक्तं निवर्तयतीति

यत्तूक्तम्[1] 'लोके शब्दस्य परोक्षज्ञानहेतुत्वदर्शनात्[2] न ब्रह्मण्यपरोक्षज्ञानहेतुत्वम्' इति, तत् स्वपक्षोपपादनाभिनिवेशादुद्भावितम्; आत्मानात्मप्रमेयवैषम्यात्। तथा हि। घटाद्यनात्मवस्तु स्वविषयाज्ञाननिवृत्तिव्यतिरेकेण स्वसंसर्गिप्रकाशमपि[3] प्रमाणफलत्वेनापेक्षते, [अस्वयंप्रकाशरूपत्वात्[4]। ब्रह्मात्मवस्तु पुनः स्वयंप्रकाशरूपत्वात् न स्वाज्ञाननिवृत्तिव्यतिरेकेण[5] प्रकाशसंसर्गं[6] प्रमाणफलत्वेनापेक्षते।] ततश्च[6] अवधारित[7]-शक्तितात्पर्यशब्दात् उदयमासादयता अद्वितीयज्ञानेन[8] स्वविषयाज्ञाननिवृत्तौ ब्रह्म स्वयमेव अपरोक्षीभवति इति ब्रह्मणि अपरोक्षानुभवहेतुः शब्दः इति निश्चीयते[9]। लोके च स्वयंप्रकाशतांव्युत्पादकं[10] आप्तवचनं हि[11] अपरोक्षज्ञानमेव संवेदने[12] जनयति। अन्यथा संविदि स्वयंप्रकाशताव्युत्पादनमनर्थकं स्यात्। न चैतावता अनुमानादेरपि ब्रह्मण्यपरोक्षानुभवहेतुत्वप्रसङ्गः, लिङ्गाद्यभावादेव ब्रह्मणि तेषामप्रवृत्तेः। शब्दस्तु यद्यपि वचनवृत्त्या न ब्रह्म गमयति, तथापि लक्षणया गमयितुं[13] शक्नोत्येव[14]। अतः परोक्षज्ञानहेतुत्वेन दृष्टोऽपि लोके शब्दः विषयविशेषादेव ब्रह्मण्यपरोक्षज्ञानमेव जनयति इति युक्तम्। अतश्च[15] शक्तितात्पर्ययोः शब्दधर्मत्वात् तद्विषयत्वाच्च[16] श्रवणस्य शब्दविशेषणत्वेन[17] प्रमाणान्तर्भावात् त्रयाणामपि श्रवणमेव प्रधानम्; तस्यैव फलप्रतिबन्ध[18]-

---

१. C: यदुक्तं; D omits it.
२. E: हेतुत्वादर्शनात्
३. C D: प्रकाशसंसर्गप्रमाणफलत्वेन; D omits प्रमाण also.
४. C: स्वयमप्रकाशत्वात्; D omits the part in brackets.
५. A drops निवृत्ति
६. C: तच्च
७. D: अवधीरित
८. A omits अद्वितीय
९. C: मीयते; D: गीयते; E: नियते
१०. D: प्रकाशसंवेदनव्युत्पादकं
११. C: अप्यपरोक्ष; D: आप्तवचनव्युत्पत्त्युत्तरपरोक्षज्ञानमेव
१२. C D: संवेदनं
१३. D: अवगमयितुं
१४. C: शक्नोत्येतावता
१५. C omits च
१६. D drops च
१७. D: विषयत्वे च
१८. E drops विगमेन, (on p. 286), omission indicated by dots.

विगमेन मननिदिध्यासने उपकुर्वाते इति तदङ्गे समाश्रीयेते। श्रवणस्य च[1] फलप्रतिबन्धविगममन्तरेण अनुभवपर्यन्तज्ञानहेतुत्वानुपपत्तेः मननिदिध्यासने[2] फलप्रतिबन्धनिवृत्तिलक्षण[3]दृष्टद्वारेण तदङ्गता[4]मश्नुवाते[5] इति नादृष्टद्वारकल्पनाप्रसङ्गः। तस्मात् शब्दान्तर्भावात् श्रवणमेव प्रधानम्; मननिदिध्यासनयोः [तद[6]ङ्गत्वमेव इति सिद्धम्[7]। 'त्रयाणामपि श्रवणादीनां शब्दः प्रमाणम्, प्रतिबन्धनिवृत्तिहेतुत्वाविशेषात् आग्नेयादिवत् तुल्यसाधनत्वम्' इति केचिदाचार्याः।] तस्मात् न कयाचिदपि युक्त्या केवलस्य मनसो ब्रह्मण्यपरोक्षानुभवहेतुत्वम् इति सिद्धम्।

इति तत्त्वशुद्धौ श्रवणादिसाधननिरूपणप्रकरणम्।

---

१. C D omit च
२. C D omit मननिदिध्यासने
३. D. निवृत्तिहेतुत्वलक्षण
४. A: तदङ्गाश्रयतां
५. C: अश्नुते
६. D omits the portion within brackets.
७. A E: स्थितम्

## ॥ अज्ञाननिवृत्तिनिरूपणं चतुश्चत्वारिंशम् ॥

शान्ता दान्ता विषमविषयद्वेषरागौ विमुच्य
कृष्णे भक्ताः[1] श्रवणमननध्यानयुक्ता मुनीन्द्राः ।
यत्सर्वज्ञं सुखवपुरजं ब्रह्म बुद्ध्वा भवन्ति
ध्वस्तध्वान्ताः परमपुरुषं नौमि तं नारसिंहम् ॥

[2]इदमिदानीं विचार्यते[3] 'किं ब्रह्मज्ञानात् अज्ञाननिवृत्तिः संभवति, आहोस्वित्[4] न संभवति?' इति । इह खलु बहवो भेदवासितान्तःकरणाः सन्तः अनाघ्रातपरमार्थतत्त्व[5]विज्ञानाः ब्रह्मज्ञाननिमित्तामज्ञाननिवृत्तिमपलपन्ति । तथा हि—'किं ब्रह्मज्ञानं परमार्थवस्तु किं वा अनिर्वचनीयम्?' इति विकल्पनीयम् । यद्याद्यः[6] कल्पः, द्वैतवादप्रसङ्गः; ब्रह्मतज्ज्ञानयोः[7] द्वयोरपि सत्यत्वात् । न च ब्रह्मैव तज्ज्ञानम्[8], तस्य नित्यत्वात्, अज्ञानस्य नित्यनिवृत्तिप्रसङ्गात् । अथोत्तरः[9] कल्पः[10], तदा[11] शुक्तिकाकलधौतादिवत्[12] अप्रमाणत्वप्रसङ्गः[13] । न चाप्रमाणेन अज्ञाननिवृत्तिर्युक्ता । किं च अज्ञाननिवृत्तिरपि विकल्पनीया 'सा किं सती, किं वा असती, आहोस्वित्[14] सदसती, किं वा अनिर्वचनीया?' इति । [15]यदि सती, तदापि पृष्टो व्याचष्टाम् 'किं सा आत्मनो व्यतिरिक्ता, किं वा अव्यतिरिक्ता, उतोभयरूपा?' इति । व्यतिरिक्ता[16]

---

१. A E: भक्त्या; D: सक्ताः
२. C omits इदमिदानीं विचार्यते
३. D: चिन्त्यते
४. C: न वेति
५. C omits वि
६. C: आद्ये द्वैत
७. D: तत्त्वज्ञानयोः
८. C D: तत्त्वज्ञानं
९. C: द्वितीये तु
१०. D E omit कल्पः
११. C D omit तदा
१२. D: तादिज्ञानवत्
१३. E: णत्वात् । न चाप्रमाणज्ञानं युक्तम् । किं च
१४. C: किं वा
१५. C: यदि सती, किमात्मनो व्यतिरिक्ता उभयरूपा वेति
१६. D: द्वैतवादप्रसङ्गो व्यतिरिक्ता चेत् । ततश्च सर्वप्रमाणविरोधो

चेत्, द्वैतवादप्रसङ्गः, ब्रह्मणस्तदज्ञाननिवृत्तेश्च द्वयोः[१] वस्तुत्वाभ्युपगमात्। अथ अव्यतिरिक्तैव सा आत्मनः, तर्ह्यात्मनो[२] नित्यसिद्धत्वात् अज्ञानस्य नित्यनिवृत्तेः, तन्निमित्तसंसार[३]प्रतिभासो न स्यात्। ततश्च[४] सर्वप्रमाणविरोधो मोक्षशास्त्रा[५]नारंभश्च[६] प्रसज्येत। अथ सा[७] भिन्नाभिन्ना आत्मनोऽभ्युपगम्येत, तदापि[८] निरूपणीयम्, 'किं येन रूपेण भेदः तेनैव रूपेणाभेदोऽपि,[९] आहोस्वित् रूपान्तरेण?' इति। आद्ये पक्षे भेदाभेदयोर्भेदाभावादद्वैतप्रसङ्गः, अज्ञानस्य[१०] नित्यनिवृत्तिप्रसङ्गो वा स्यात्। रूपान्तरेण[११] चेत्, तयोरपि रूपयोः भेदाभेदौ भिन्नाश्रयौ स्याताम्। अभेदे तु भेदाभेदयोरेकत्वप्रसङ्गः। भेदाभेदाभ्युपगमे[१२] तु[१३] तत्रापि रूपान्तरकल्पनायां अनवस्था प्रसज्येत। [[१४]अतो नाज्ञाननिवृत्तिः सती।] अथासती[१५][१६] परिकल्प्येत, तदापि वक्तव्यम् 'किं तदसत् भावान्तरम्, उत षष्ठगोचरः, किं वा तुच्छम्?' इति। यदि भावान्तरं द्वैतप्रसङ्गः। [[१७]अथ षष्ठगोचरः[१८], तर्हि तत्प्रतियोगिनोऽज्ञानस्य सत्यत्वप्रसङ्गः,] लोके घटादिषु तथा दर्शनात्। अथास[१९]त्तु[२०]च्छमिच्छसि, तदा अज्ञानस्य नित्यत्वप्रसङ्गः, तन्निवृत्तेर्गगनकुसुमसमत्वात्[२१]। न चाज्ञाननिवृत्तिः सदसती, तथाविधवस्तुनोऽप्रसिद्धत्वात्, सदसद्वाद[२२]प्रसङ्गाच्च। अथानिर्वचनीया अज्ञाननिवृत्तिः,

---

१. E: वस्तुभाव।
२. A: आत्मनः स्यात्, तथा ह्यात्मनः being a later correction.
३. A E: संस्कार
४. C: अतश्च
५. D: वेदान्तशास्त्र
६. E omits च
७. D omits सा
८. C drops अपि
९. B omits अपि
१०. D: प्रज्ञानस्य
११. C adds इति
१२. D: अथ भेदाभेदावभ्युपगम्येत
१३. A D omit तु
१४. A D E drop the words bracketed.
१५. A D E: अथाज्ञाननिवृत्तिरसती
१६. D adds इति
१७. D omits the part in brackets.
१८. A D: गोचरम्
१९. C: अथासत्यमिति; D: अथ तुच्छमिच्छसि
२०. E omits असत्
२१. D: कुसुमत्वात्
२२. All except C give स्याद्वाद

तदापि विवेचनीयम्[1] 'सा किमज्ञानोपादाना, किमात्मोपादाना[2], उतानादिः ?' इति। आद्ये कल्पे[3] तद्वत्[4] तदुपादानमप्यवतिष्ठेत[5]। न हि कार्येऽवतिष्ठमाने कारणं[6] निवर्तमानं क्वचिदुपलब्धपूर्वम्[7]। द्वितीये तु आत्मनः परिणामित्वप्रसङ्गः; अज्ञाननिवृत्तेश्च सत्योपादानत्वेन सत्यत्वात् द्वैतवाद[8]प्रसङ्गश्च। अथानादिरेव सा अभिप्रेता, तर्हि नित्यनिवृत्तेः[9] अज्ञानस्य संसारानुपलब्धिः शास्त्रानारंभश्च इत्युक्तदोषः[10] प्रसज्येत। तस्मान्न ब्रह्मज्ञानादज्ञाननिवृत्तिरवकल्पते—इति।

अत्रेदमाचक्ष्महे[11]। "तरति शोकमात्मवित्" (Chānd. VII, i, 3) "अविद्यायाः परं पारं तारयसि[12]" (Praśna, VI, 8) "भूयश्चान्ते विश्वमायानिवृत्तिः" (Śvet., I, 10) "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" (Gītā, VII, 14) "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" (Gītā, V, 16) "तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते" इत्यादिश्रुतिस्मृतयस्तावत्[13] ज्ञानादज्ञाननिवृत्तिं दर्शयन्ति। लोके च रज्ज्वादिविषयप्रमाणज्ञानं सर्पादिविपर्यासेन साकं तदज्ञानं निवर्तयत् दृश्यते। ततश्च श्रुतिस्मृतिन्यायैः ब्रह्मात्मैकत्व[14]विज्ञानादेव तद्गताज्ञानस्य कार्येण सह निवृत्तिर्निश्चीयते।

यत्पुनरुक्तम्[15] 'प्रपञ्चस्य मिथ्यात्वात् तदन्तर्भूतत्वाच्च ब्रह्मज्ञानस्य शुक्तिका[16]-

---

१. C: वक्तव्यम्
२. A: किं वा; D omits this alternative.
३. E: कल्पे...अज्ञानमप्य
४. A D drop तद्वत्
५. A: अप्यज्ञानमवतिष्ठते
६. D: कारणनिवृत्तिः
७. D: पूर्वा
८. D omits वाद
९. A: निवृत्तिः
१०. D: उक्तो दोषः
११. C: अत्रोच्यते
१२. A has a corrupt addition: तेषाञ्चमित्यवस्त्वज्ञानं प्रकाशयति तं वरम्।
१३. C: श्रुतयः स्मृतयश्चात्मज्ञानात्
१४. A E: ब्रह्मात्मत्व
१५. D: यदुक्तम्
१६. D: शकलकलधौतादि

कलधौतादि[1]ज्ञानवदप्रमाणत्वात् न तेनाज्ञाननिवृत्तिः ; तस्य[2] वस्तुत्वे वा द्वैत[3]प्रसङ्गः ’ इति, तदे[4]तदविचारितमिव[5] दृश्यते ; यतः प्रमाणस्वरूपस्य सत्यत्वमसत्यत्वं वा न प्रामाण्याप्रामाण्यहेतुः, किं तु ‘ यद्यत्राबाधितप्रतीतिं जनयति त[6]त्तत्र प्रमाणम् ’ इति प्रमाणविदां स्थितिः ; घटादेः स्वरूपेण सत्यस्यापि तदभावे सति प्रमाणत्वादर्शनात् । स्यादेतत् ‘ न[7] स्वरूपसत्यत्वं प्रामाण्ये कारणं [[8]ब्रूमः ; किं तु असत्यत्वमप्रामाण्यकारणम् , ] शुक्तिरूप्यादौ तथा [9]दर्शनात् ’ इति ; तदप्यपेशलम् , वर्णदैर्घ्यादेः असत्यस्यापि सत्या[10]र्थप्रतिपत्तिहेतुत्वदर्शनात् । ननु वर्णदैर्घ्यादि[11] स्वरूपेणासत्यं न भवति ; किं तु वर्णात्मत्व[12]मात्रं तस्यासत्यम् । बाढ[13]मेतत् । तथा[14]पि तस्य येनात्मना वर्णप्रतिपत्तिहेतुत्वं तेनात्मना तदसत्यमेव । न हि दैर्घ्यमात्रं वर्ण[15]प्रतिपत्तिहेतुः, किं तु वर्ण[16]धर्मत्वेन । तच्चासत्यमिति सर्वेषां[17] संप्रतिपन्नम् । अख्यातिपक्षे च संसर्ग[18]भ्रमानभ्युपगमेऽपि[19] अविवेकात् सत्यवस्तुप्रतिपत्तिरिष्टा । तद्वदनिर्वचनीये[20]मपि सत्यवस्तुविषयं विज्ञानं प्रमाण[21]मुपपद्यते । स्यान्मतम् ‘ असत्यमपि स्वरूपेण ज्ञानकारणं प्रमाणज्ञानं जनयतु नाम ; ज्ञानं तु न क्वचिदसत्यभूतं प्रमाणं दृष्टम् ; प्रत्युत[22] अ[23]प्रमाणमेव रज्जुसर्पादिज्ञान[24]मुपलभामहे ’ इति । नैतत्सारम् ;

---

१. A omits ज्ञान
२. D: तस्यावस्तुत्वे च
३. C: द्वैतवादप्रसङ्गः
४. C D omit एतत्
५. C: अविचारिताभिधानम्
६. E: तत्र
७. D: न च
८. A E omit the words bracketed.
९. A: दृष्टत्वात्
१०. A D: सत्यवर्णप्रतिपत्ति
११. D: दैर्घ्यं
१२. A corrects it later as वर्णप्रतिपत्तिधर्मत्वमात्रं ; D: वर्णधर्मत्वमात्रं
१३. C: बाढमेव; D: सत्यमेतत् ; E: बाढमे तथापि
१४. A: तथापि
१५. D omits this word.
१६. A: वर्णात्मत्वे
१७. D omits सर्वेषां
१८. A: भूमा
१९. D omits अपि
२०. D: नीयस्यापि सत्यवस्तुविषयज्ञानस्य
२१. D: प्रमाणत्वमुपपद्यते
२२. D drops प्रत्युत
२३. A: अप्रामाण्य
२४. D: विज्ञानं

यावता[१] अबाधितप्रतीतिजनकत्वादेव ज्ञानस्य प्रामाण्यम्[२], न[३] स्वरूपसत्यत्वेन । रज्जुसर्पादिज्ञानस्य तु बाध्य[४]विषयत्वेन[५] प्रमितिजनकत्वाभावात् अप्रामाण्यं इति विशेषः । अपि च सर्वस्य ज्ञान[६]ज्ञेयादिलक्षणस्य प्रपञ्चस्य स्वप्ना[७]दिदृष्टान्तेन श्रुतिस्मृतिशतेन च[८] मिथ्यात्वावगमात्, ज्ञानानां च प्रामाण्यदर्शनात् स्वरूपेण ज्ञानानां मिथ्यात्वं प्रामाण्यं च श्रुतिस्मृतिन्याय[९]सिद्धं अनुभवसिद्धं च नापलपितुं शक्यम् ।

यदप्युक्तम् ' अज्ञाननिवृत्तिः किं[१०] सती, किं वा असती ? ' इत्यादि, तदखिलमाकाशमुष्टिहनन[११]मिव अयोग्यविषयमेवा[१२]नवसरदुष्टं विकल्पजालमुत्पश्यामः ; यस्मात्[१३] नाज्ञाननिवृत्तिः सदसदनिर्वचनीयप्रकारा अस्माभि[१४]रभ्युपगम्यते, किं तु पञ्चमप्रकारा । सदसदा[१५]दिप्रकाराः किल निवृत्त[१६]योर्भावाभावयोरेव दृष्टाः । अज्ञानं पुनः सदसद्विलक्षणम् । अतस्तन्निवृत्तिरपि तदनुसारिणी युक्ता । यक्षानुरूपो बलिरिति हि न्यायः । तस्मादज्ञानस्यानिर्वचनीयत्वं[१७] ब्रह्मज्ञा[१८]ना-[द[१९]ज्ञाननिवृत्तिं च श्रुतिस्मृतिन्यायैरुपलभ्य अनिर्वचनीयाज्ञानानुसारेण सदसदादिप्रकारविलक्षणामज्ञाननिवृत्तिं परिकल्पयामः इति ना]–ज्ञाननिवृत्तेरभाव[२०]प्रसङ्गो नापि[२१] द्वैतवादप्रसङ्गः । अथ वा आत्मस्वरूपमेव अज्ञाननिवृत्तिः । [य[२२]था च लोके घटादिप्रागभावनिवृत्तिः

---

१. A omits यावता
२. D: प्रमात्वं
३. D: एवं च for न
४. D: बाधित
५. C omits न in विषयत्वेन
६. D: ज्ञानस्य
७. C omits आदि
८. D omits च
९. C: न्यायानुभवसिद्धं च
१०. C omits किं
११. C: विदलन for हनन
१२. C omits एव
१३. D omits यस्मात्
१४. D drops अस्माभिः
१५. D omits सदसदादिप्रकाराः
१६. D: निवृत्तौ
१७. C: अनिर्वचनीयतां
१८. D: ब्रह्मज्ञाननिवृत्तिं
१९. E omits the part in brackets.
२०. C: निवृत्त्यभाव
२१. C omits नापि द्वैतवादप्रसङ्गः
२२. C omits a long part in brackets, up to line 3 on p. 293.

घटादिस्वरूपमेव[1] । अन्यथा प्रागभावनिवृत्तेरभावत्वे सति घटादेरेव[2] निवृत्तिमतो भावस्याभावत्वप्रसङ्गः । भावान्तरत्वे तु[3] 'तस्यैवासौ प्रागभावः' इति न[4] घटप्रागभावनिवृत्तिः स्यात् । तस्मात् यथा[5] घटादिप्रागभावनिवृत्तिः घटादिरेव, एवं ब्रह्माज्ञाननिवृत्तिरपि निवृत्तित्वात्[6] निवृत्तिमत्प्रतियोगि[7]स्वरूपमात्रमेव इति युक्तम् । तच्च[8] अज्ञानप्रतियोगिब्रह्मात्मस्वरूपमेव, स्वयंप्रकाशत्वेन ज्ञानस्वरूपत्वात् । ननु 'नित्य आत्मा कथं नैमित्तिकाज्ञाननिवृत्तिर्भवेत्? यदि च आत्मैवाज्ञाननिवृत्तिः, तर्हि सा अनाद्यनन्ता इत्यज्ञानस्य नित्यनिवृत्तत्वादयो[9] दोषाः प्रादुष्ष्युः । अथ आत्मा अज्ञाननिवृत्तिरेव, तर्हि तस्य कादाचित्कत्वादयो[10] दोषाः प्रसज्येरन्' इति । तदप्यसाधु भाषितम् । अभावापलापवादिनः तावत्[11] पूर्वसिद्धभूतल[12]मात्रमेव पश्चिमसिद्धघटादिनिवृत्तिरिति संप्रतिपन्नम् । अभाववादिनोऽपि[13] कार्यप्रागभावस्य कारणाश्रयत्वात् कारणेन कार्यप्रागभाव[14]सम्बन्धोऽभ्युपगतः । सम्बन्धस्य च[15] सम्बन्धिनिवृत्तौ निवृत्तिः प्रसिद्धा । सा च सम्बन्धनिवृत्तिः कारणस्वरूपमेव, अभाव[16]रूपनिवृत्तेरनिष्टत्वात् । कार्ये तु प्रागभावस्यैव निवृत्तिः, न[17] तत्सम्बन्धस्य कार्यस्य । कारणेन सम्बन्ध एव कार्यप्रागभावस्य कारणसम्बन्धनिवृत्तिरिति चेत्, तदप्यसत्; कारणसम्बन्धस्य स्वप्रागभावनिवृत्तित्वात् । न च कार्यप्रागभावस्य कारणसम्बन्धो भाव[18]-

---

१. D: घटादेः
२. D: घटादेरिव
३. D omits तु
४. D omits न
५. A omits यथा
६. D omits निवृत्तित्वात्
७. D: त्प्रयोगमात्मस्वरूपमेव
८. D: तत्तु for तच्च
९. A: निवृत्तित्वादयो
१०. D: कादाचित्कत्वेनानित्यत्वादयो दोषाः
११. D: भाववत् for तावत्
१२. E: भूतमेव···घटादि
१३. D omits अपि ;
E: पि···र्यप्रागभावस्य
१४. D: प्रागभावस्य
१५. D omits च
१६. D: अभावस्य भावनिवृत्तेः
१७. D: ननु घटस्य कारणेन सम्बन्ध एव प्रागभावस्य कारणसम्बन्धो भावरूप एवेति
१८. E: सम्बन्धाभाव

रूप एवेति शङ्कनीयम्; सम्बन्धिद्वयाश्रयत्वात्सम्बन्धस्य,[1] अभावस्य च[2] भावरूपसम्बन्धं प्रत्याश्रयत्वानुपपत्तेः । अतः[3] कार्यप्रागभावस्य कारणेन[4] सम्बन्धश्चेदाश्रीयेत, स भावरूपोऽनिर्वचनीयो वा अभ्युपेयः । ] तस्मात्[5] सर्ववादिसंप्रतिपन्नं पश्चिमसिद्धभावविलक्षणनिवृत्तित्वं[6] पूर्वसिद्धभावस्यैव इति । अपि च ब्रह्माकारपरिणतान्तःकरणवृत्त्युपलक्षितरूपेणैव[7][8] ब्रह्माज्ञाननिवृत्तिः,[9] न अविशेषितरूपेण । यथा घटविनाशोपलक्षितमेव[10] भूतलं[11] घटनिवृत्तिः । न चैतावता[12] ब्रह्मणः[13] सविशेषत्वप्रसङ्गः; उपलक्षकान्तःकरणवृत्तेः[14] कारणविनाशेन निवृत्तौ[15] तन्निमित्तोपलक्षणाभावात् । तस्मात् ब्रह्मज्ञानात् अज्ञाननिवृत्तिरुपपन्नतरा इति[16] सिद्धम् ।

इति तत्त्वशुद्धौ अज्ञाननिवृत्तिनिरूपणप्रकरणम् ।

---

१. A: द्वयाश्रितत्वात्;
E: सम्बन्धतयाश्रितत्वात्

२. E omits च

३. Missing in all except C.

४. A E omit कारणेन

५. C: यस्मात्

६. D: भावनिवृत्तिः पूर्वसिद्ध etc.

७. C D: ब्रह्मभाव

८. E: रूपेणैवास्याज्ञान

९. A: ब्रह्मणः अज्ञान;
D: ब्रह्मस्वाज्ञान

१०. D: घटाविनाश

११. D: भूतं

१२. C omits च

१३. E: ब्रह्मविशेषत्वप्रसङ्गः

१४. D: लक्षणान्तःवृत्तैः;
E: उपलक्षितान्तः

१५. E: निवृत्तेः

१६. C omits इति सिद्धम्

## ॥ जीवन्मुक्तिसमर्थनं पञ्चचत्वारिंशम् ॥

हित्वा बाह्यसुखाभिलाषमखिल[१]प्राणप्रवृत्तिं सदा
रुद्ध्वा वेदशिरोऽवलोकनपरैः यत्ते पदं दृश्यते ।
तत्साक्षादपरोक्षमद्वयमहं त्वत्पादपद्माश्रयात्
आत्मानन्दमहो विभाव्य नृहरे जीवन्वि[२]मुक्तोऽभवम् ॥

[३]इदमिदानीं चिन्त्यते ‘ किं जीवन्मुक्तिः संभवति, आहोस्विन्न[४] संभवति ? ’ इति । इह [५]खलु केचित् [ [६]अनिवृत्ता[७]संभावनाविपरीत[८]भावनात्मयाथात्म्याः स्वप्रज्ञानुसारेण उपनिषद[९]र्थमप्यन्यथा वर्णयन्तः] सङ्गिरन्ते—जीवन्मुक्तिरितीयं प्रतीतिरेव विप्रतिषिद्धा लक्ष्यते[१०] । तथा हि । जीव[११]नं नाम आत्मनो जागरिताद्यवस्थात्रयावच्छेदः । मुक्तिः पुनः अवस्थात्रयतत्कारणाविद्यो[१२]च्छेदे सति नित्यनिरतिशयानन्दचैतन्यब्रह्मरूपाविर्भावः । एवं च[१३] सति विप्रतिषिद्धमेतत् जीवतो मुक्तिरिति । अपि च “ तयोर्ध्वमायन्नमृतत्वमेति ” (Chānd., VIII, vi, 6) इति ब्रह्मनाड्या शरीरादुत्क्रामतोऽमृतत्वप्राप्तिः श्रुता । जीवन्मुक्तिपक्षे तु सा विरुद्ध्यते । किं च ब्रह्मज्ञानमज्ञानं निवर्तयत् तत्[१४]कार्यभूतं शरीरेन्द्रियादिक[१५]मपि निवर्तयेत् । यदि चाज्ञाने निवृत्तेऽपि शरीरेन्द्रियादि न निवर्तेत, तर्हि तस्याज्ञानकार्यत्वा[१६]सिद्धेः परमा[१७]र्थसत्यत्वप्रसङ्गः ;

---

१. A C E: मखिलं
२. D: जीवंश्च
३. C omits up to चिन्त्यते
४. C: नेति
५. C omits खलु
६. C omits the portion bracketed.
७. A: अनिर्वृत
८. All except D omit भावना
९. D: उपनिषत्पदार्थ
१०. C omits लक्ष्यते
११. D: जीवेनात्मनो
१२. C: अविद्यानवच्छेदे
१३. D omits च
१४. E: तत्कार्यं
१५. A: यादि कथं न निवर्तयेत् ?
१६. D: सिद्धेः
१७. C: परमार्थसत्त्व ;
D: परमार्थत्व

ततश्च अद्वैतहानिः। न[1] च जीवत एव मुक्तिर्भवतीति[2] किञ्चित्प्रमाणं पश्यामः। तस्मादयुक्ता[3] जीवन्मुक्तिकल्पना—इति।

अत्र[4] वदामः। जीवन्मुक्त्यनङ्गीकरणे विद्यैवानुपपन्ना[5] स्यात्। तथा हि। आचार्योपदिष्टा विद्या नाम भवति, "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्[6]" (Chānd., IV, ix, 3) "आचार्यवान् पुरुषो वेद" (Chānd., VI, xiv, 2) इत्यादिश्रुतिभ्यः। न ह्यसाक्षात्कृतब्रह्मभावो विद्यागुरुर्भवति, ब्रह्मण्यपरोक्षैकरसे[7] परोक्षज्ञानस्य[8] भ्रान्तित्वात्। न हि[9] भ्रान्तः तत्त्वज्ञानमुपदेष्टुमीष्टे[10]। तथा च निखिलजगद्गुरोर्भगवतोऽनुशासनम् "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" (Gītā, IV, 34) इति। तत्र "ज्ञानिनः" इत्युक्ते परोक्षज्ञानवतो गुरुत्वं मा[11] भूत् इत्याह "तत्त्वदर्शिनः" इति। एतावन्मात्राभिधानेऽपि[12] उपाधिविशिष्टं[13] ब्रह्म उपासनया साक्षात्कुर्वन्नपि ब्रह्मविद्यागुरुः प्रसज्येत। तन्मा भूदित्याह[14] "ज्ञानिनः" इति। अतो "ज्ञानिनस्तत्त्वदर्शिनः" इत्युभयविशेषणेन शब्दप्रमाणजनितापरोक्षज्ञानवन्तमेवाचार्यं[15] दर्शयति। न च प्रमाणेन साक्षात्कृते वस्तुतत्त्वे तत्राज्ञानमवतिष्ठते। तस्मात् दग्धाज्ञान[16] एव ज्ञानोपदेशे[17] आचार्य इति गम्यते। अज्ञाने दग्धे तत्कार्यभूतोऽपि[18] कार्यकरणसंघातबन्धो[19] दग्ध एव भवति। स च दग्धोऽपि कार्यकरण-

---

१. A C: न हि

२. C: भवतीत्यत्र

३. E: अप्रयुक्ता

४. D: तत्र

५. D: अनुपपन्नं

६. प्रापयति is the reading found in the upaniṣad text.

७. C omits एक

८. C: परोक्षस्य भ्रान्तित्वात्

९. C drops हि

१०. C: तत्त्वदर्शनं

११. E omits मा भूदित्या

१२. D: तावान्मात्र

१३. C D: विशिष्टब्रह्मोपासनया

१४. D: इत्युक्तम्

१५. D E: ज्ञानमेवाचार्यं

१६. C: दग्धाज्ञाना एव; D: विज्ञानवानेव

१७. C: ज्ञानोपदेष्टार आचार्याः; D: ज्ञानोपदेशात्

१८. C: भूतोऽयं कार्यकारणसंघातोऽपि

१९. D: सम्बन्धो

संघातो[1] दग्धपटाकारेण कञ्चित्कालं बन्धाकारेण[2]ावभासते । तथाप्यसौ दग्धाविद्या[3]तत्कार्यत्वात् कार्यकरणसंघातं दग्धमेव पश्यति, नात्मत्वेन[4] । अतोऽविद्यातत्कार्यदाहात् तन्निमित्तजागरिताद्यवस्थासम्बन्धो[5]ऽपि न विदुषो[6] भवति[7] । तस्मात् विद्वान् मुक्त एवाचार्यः, नाविद्वान् , नापि बद्धः । तत्र विदुषि जीवशब्द[8]प्रयोगो दग्धपटे[9] पटशब्दवत् ; दग्धस्यापि बन्धस्य[10] कञ्चित्कालं प्रतिभासनात् । अतो विद्योदयान्यथानुपपत्तिः जीवन्मुक्तमेवाचार्यं गमयति ।

ननु[11] 'आचार्यस्य दग्धाविद्यातत्कार्यत्वात् तद्दृष्ट्या जीवान्तरस्याभासत्वात्[12] स्वात्ममुक्त्यैव[13] तन्मुक्तिं जानन् कथं तं प्रति मोक्षार्थं विद्यामुपदिशेत् ? न हि स्वप्नावस्थायामनेकैः सह सागरे[14] निमज्य स्वयं प्रतिबुद्धः पुनस्तानालोकयन्नपि उद्धर्तुमुत्सहते । उपदिशन्नपि "मन्मुक्त्यैव मोक्ष्यसे, मोक्षाय प्रयत्नं[15] मा कार्षीः" इत्येवोपदिशेत्[16] ' इति ।

अत्रोच्यते[17] । न तावदनेकजीवपक्षे काचिदनुपपत्तिः ; प्रत्येकमज्ञानानां भेदात् , स्वपराज्ञानपरिकल्पितत्वात् साधारणासाधारणप्रपञ्चस्य अनेकपुरुषदृष्टेन्द्रजालवत् नष्टानष्टत्वोपपत्तेः[18], स्वज्ञानेन स्वाज्ञानमात्रस्यैव निवृत्तेः अन्यं प्रत्युपदे-

---

१. A D: सम्बन्धो ; C: संघाता
२. D: ब्रह्माकारेण
३. A: अविद्यात्वात्
४. D omits नात्मत्वेन
५. D: संभवो
६. A: दोषो; E omits it.
७. D adds इति after भवति
८. A: जीवन
९. A D: दग्धपटवत्
१०. C omits बन्धस्य
११. A D: न तु ; E. न च
१२. D: अभावात्
१३. C: आत्ममुक्त्यैव
१४. D: संसारसागरे निमग्नः
१५. A D omit प्र
१६. C omits एव
१७. D: तत्र
१८. E adds च

शोऽर्थव ानेवेति। अयं तावदङ्गीकरणवादः । एकजीववादे तु यावन्[1]मुमुक्षोरज्ञस्य[2] न निर्विचिकित्सं विज्ञानमुदयमासादयति तावत्[3]स्वाज्ञानपरिकल्पितं [4]बद्धमुक्तगुरुशिष्य-जीवेश्वरविद्याविद्यादिविभागजातमवभासते । तत्राचार्यः शिष्याविद्यया[5] अवभासमानो यावदज्ञान[6]महंप्रत्ययानुवृत्तेः प्रमाण[7]व्यवहारानुवृत्तेः[8] शास्त्रप्रामाण्यादेव जीवन्मुक्तोऽव-भासते, न[9] जडतया[10] नाप्यज्ञतया इति सर्वमुपपन्नम् । अपि च न केवलम[11]र्थापत्त्यैव जीवन्मुक्त्यवगमः । श्रुतिश्च जीवन्मुक्तिं दर्शयति । "तद्यथाहिनिर्ल्वयिनी वल्मीके मृता प्रत्यस्ता शयीत एवमेवेदं शरीरं शेते अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव" (Bṛh., IV, iv, 7) इति । तथा "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव सवागवागिव" इत्यादि[12] च; दग्धाविद्यत्वात् कार्यकरणरहितोऽपि तद्वानिव इति योजना । स्मृतिश्च स्थितप्रज्ञलक्षणानि अद्वेष्टृत्वा[13]मानित्वादिधर्मकलापं गुणातीतलक्षणं[14] चाचक्षाणा स्पष्टमेव जीवन्मुक्तमाचष्टे । अत एव विदुषो जीवना[15]भासे जीवनव्यवहारात् जीवन्मुक्तिरिति प्रतीतिः । सा तु[16] विप्रतिषिद्धेति शाठ्य[17]मात्रेण परैरुद्भावितम् । "तयोर्ध्वमायन्नमृतत्वमेति" (Chānd., VIII, vi, 6) इति च कार्यब्रह्मप्राप्तिविषयत्वात् न तत्[18] परब्रह्मविदो जीवन्मुक्तिं प्रतिबध्नाति ।

---

१. E: यावन्मुक्तमुमुक्षोः

२. A: अज्ञानस्य निर्विचिकित्सम् ; D: विरक्तस्य

३. D: यतो वस्त्वज्ञान

४. A: बन्धमुक्त ; D: बन्धमुक्ति

५. E omits अविद्यादि

६. A D: यावदज्ञानादहंप्रामाण्यव्यव-हारानुवृत्तेः

७. E omits प्रमाणव्यवहारानुवृत्तेः

८. D: उपपत्तेः

९. D: न च ; E omits न

१०. A D E: बद्धतया

११. D: आत्मज्ञानानुपपत्त्यैव

१२. C: इत्याद्या च ; D: इत्यादि । अस्यायमर्थः । कार्य-कारण etc.

१३. A E: अद्वेषत्वादिलक्षणानि

१४. D: लक्षणं चक्षणाः स्पष्टमेव

१५. A: जीवनाभ्यासे ; D: जीवनभावे

१६. A E omit तु

१७. E: साम्य for शाठ्य

१८. C: न तु ; D: न तावत्

यत्पुनरुक्तम् ‘ब्रह्मज्ञानम[1]ज्ञानं निवर्तयत् [2]तत्कार्यमपि निवर्तयति’ इति, तत्तथैवाभ्युपगम्यते । तथापि प्रारब्ध[3]फलस्य कर्मणो मुक्तेषुवत् [4]यावद्वेगक्षयमनुवृत्तेः, तस्य च कार्य[5]करणसंघातप्रतिभा[6]सव्यतिरेकेणासंभवात्, सं[7]स्कारनिमित्तो देहेन्द्रियादि-प्रतिभासोऽज्ञान[8]लेशनिमित्तो [9]वा दग्धपटन्यायेन [10]इति समाश्रयणीयम्; अन्यथा प्रारब्धकर्मानुवृत्तिप्रापकस्य [11]वा ज्ञानादज्ञाननिवृत्तिप्रापकस्य [12]वा [13]बाधप्रसङ्गात् । तत-श्चोभयविधप्रमाणविरोधपरिहाराय बाधितस्यै[14]व देहेन्द्रियादेः दग्धपटन्यायेन विदुषोऽपि प्रतिभास उपपद्यते । कुतस्तर्हि प्रमाणात् प्रारब्धफलस्य कर्मणोऽनुवृत्तिरवगता? [[15]इति । उच्यते । “आचार्यवान् पुरुषो वेद” (Chānd., VI, xiv, 2) “तस्य ताव-देव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये” (Chānd., VI, xiv, 2) इति विदुषोऽपि कञ्चित्कालं शरीरपा[16]तस्य विलम्बकरणात् श्रुत्यैव [17]आरब्धकर्मणोऽनुवृत्तिरवगता ।] लोके च मुक्तश[18]रादेरपि कारणनाशात् तत्प्रतिबन्धाद्वा विनाशप्रतिबन्धौ [19]दृश्येते । यद्यपि तत्र समवा[20]यिकारणनाशादे[21]व भवत्येव[22] नाशादिः, तथापि हेतुविनाशेऽपि कार्य-

---

१. D omits अज्ञानं
२. A E omit तत्
३. D: प्रारब्धपदलभ्यकर्मणो
४. A wrongly corrects it into मुक्तेषु विद्यावद्वेगक्षय; C: यावद्वेगाक्षय
५. D omits कार्यकरण
६. D: प्रतिभासस्य
७. D: संसार
८. C: शेष for लेश
९. A: अपि
१०. A D: वेति
११. C omits वा
१२. C: च for वा
१३. E: प्रामाण्यस्य बाधप्रसङ्गात्
१४. D omits स्यैव
१५. E omits the part bracketed.
१६. A: शरीरस्य पातविलम्बकरण
१७. C: प्रारब्धफलकर्मणो
१८. C D: शरीरादेरपि
१९. C D E have a न here.
२०. A: समावयि
२१. C D: कारणनाशादेः
२२. E omits एव

विनाशे भवत्येव दृष्टान्तः । स्मृतिश्च स्थितप्रज्ञलक्षणाभिधानेन प्रारब्धकर्मानुवृत्तिं दर्शयति । तदाह भगवान् बादरायणः "अनारब्धकार्ये एव तु पूर्वे तदवधेः" (Br. Sū, IV, i, 15) इति । तस्मात् सिद्धैव जीवन्मुक्तिरिति ।

इति तत्त्वशुद्धौ जीवन्मुक्तिनिरूपणप्रकरणम् ।

---

१. A D: दृष्टान्तो भवत्येव

२. C: अभिधानप्रारब्धं ;

D: विधानेन

३. C: तथा चाह

## ॥ मोक्षनिरूपणं षट्चत्वारिंशम् ॥

भूमानं[1] भुवनैकमूलममलं[2] ज्योतिः परं शाश्वतं
नित्यं निष्कलमद्वितीयनिखिल[3]प्रेमास्पदं ते पदम् ।
पश्यन्मोक्षमहानिधिं निरवधिं लब्धास्मि धन्यः कृती
त्वत्पादाम्बुजकुड्मलं[4] नरहरे संश्रित्य सर्वात्मना ॥

इदमिदानीं[5] चिन्त्यते 'किमात्मनः स्वतः[6]सिद्धानतिशयानन्दब्रह्मरूपाविर्भावो मोक्षः, किं वा आत्मगतातिशयोत्पत्तिः?' इति । इह खलु बहवो मोक्षवादिनः तत्त्वदर्शनपराङ्मुखा विपर्यासदर्शनेन अन्यथा मोक्षं कल्पयन्ति । तथा हि । माध्यमिका[7]स्तावत्[8] 'शून्यमेव परमार्थतो विपर्यासदर्शनेन तु[9] निखिलमिदं सदात्मकमवभासते । तत्र [शून्य[10]भावनात् प्रकर्षपर्यन्तात् शून्यभात्रो मोक्षः' इति कल्पयन्ति । योगाचारास्तु स्व[11]लक्षणभावनया दुःखभावनया] शून्यभावनया च प्रदीपनिर्वाणवत् संसारविज्ञानप्रवाहोपरमं[12] सर्वज्ञ[13]सन्तानान्त[14]र्भावं वा[15] अपवर्गमिच्छन्ति । आर्हतास्तु कर्माष्टकपुर्यष्टकपरिवेष्टितस्य तपसा अद्वैतविज्ञानेन आत्मैकाकारसमाधिना च बन्धप्रध्वंसे सति पञ्जरस्थस्येव[16] [शुक[17]स्य पञ्ज]रभञ्जन इव संतत[18]-

---

१. D: भूमा तं

२. A D E: अमलज्योतिः

३. D: अखिलं

४. A: कल्पकं ; D: मच्युतं

५. C omits इदमिदानीं चिन्त्यते

६. D omits स्वतः

७. D: आध्यात्मिकाः

८. A omits वत् in तावत्

९. D omits तु

१०. C omits the words bracketed.

११. A E omit स्व

१२. D: प्रवाहोपरमे

१३. A: सार्वज्ञ

१४. D: आविर्भावं

१५. D omits वा

१६. D omits इव

१७. E omits the letters within brackets.

१८. A D: सन्ततमलोकाकाशगमनं

गमनमलोकाकाशगमनं[1] वा[2] कैवल्यं[3] कल्पयन्ति। वैशेषिकास्तु द्रव्यादिपदार्थसालक्षण्यवैलक्षण्यपरिशोधनपूर्वकात्म[4]याथात्म्यविज्ञानात् [स[5]न्ततमीश्वरोपासनसहितात् नवानामात्मनो वैशेषिकगुणानां अत्यन्तमेवोच्छेदं मोक्ष[6]मिच्छन्ति। नैयायिकाः पुनः प्रमाणप्रमेयादिषोडशपदार्थान् परिशोध्य आत्मादिद्वादशविधप्रमेयनिष्कर्षात् आत्म-] याथात्म्यावगमे सञ्जाते तत्सहितात्परमेश्वरोपासनात् नवानां[7] वैशेषिकगुणानां अत्यन्तोपरमं निर्वाणं कल्पयन्ति। आत्मज्ञानपूर्वकात्तु वैदिककर्मानुष्ठानात् तेषामेव गुणानामुप[10]रमलक्षणं मोक्षं प्राभाकरा मन्यन्ते[11]। भाट्टा[12]स्तु [13]वर्णयन्ति 'वैदिककर्मानुष्ठानादेवात्मज्ञानपूर्वकात् नित्यज्ञानं नित्यसुखं चोत्पद्यते; ततश्च नित्यज्ञानेन आत्मनो विषयविशेषानपेक्ष[14]या नित्यानन्दानुभवो मोक्षः' इति। अपरे तु वेदान्तार्थमप्यन्यथा[15] कुर्वन्तः संसारमण्डलात् बहिरेव ब्रह्मसद्भा[16]वमभ्युपगम्य जीवेश्वरयोः नियन्तृनिय[17]म्यविज्ञानपूर्वकं ईश्वरार्चनध्यानसमाधिभिरर्चिरादिमार्गेणात्मनो ब्रह्मसम्बन्धमपुनर्भावं मन्यन्ते। केचित्तु वेदान्तिंमन्याः स्वभावतो ब्रह्मभूतस्यापि जीवस्य ज्ञानकर्मसमुच्चयात् उपाधिप्र[18]ध्वंसे ब्रह्मभावाविर्भावा[19]च्च अद्वैतब्रह्मभावो मोक्ष इत्युत्प्रेक्षन्ते।

---

१. A C D: आकाशगमनं; E: आलोकाकाश
२. A D E omit वा
३. D omits कैवल्यं
४. A: पूर्वकमात्म
५. D: याथात्म्यावगते संजाते etc., omitting the words in brackets.
६. A E omit मोक्षं
७. E omits नवानां
८. A: चोदित
९. E: ह्यानं
१० D omits [illegible]
११. A E: प्रतिपद्यन्ते; D: प्रतिपाद्यन्ते
१२. E: भार्गवास्तु
१३. C: वेदयन्ति
१४. D: अपेक्षणं
१५. D: वेदान्तार्थानप्यन्यथा
१६. E: संभाव
१७. A: नियाम्य
१८. C: उपाधिप्रा...से ब्रह्मभावाविर्भा...मोक्ष इत्युत्प्रेक्षन्ते; E: उपाधिब्रह्मभावाविर्भावं च
१९. A: भावे च

तदेतदखिलं प्रमाणशून्यमेव स्वमनीषिकामात्रसं[1]मुत्प्रेक्षितमिति न तत्प्रतिक्षेपे महता संरंभेण भवितव्यम् । तस्मात्स्वपक्षोपपादनाय तत्र तत्र [2]किञ्चिद्दूषणमुद्भा[3]वयामः । तथा हि । शून्यमोक्ष[4]पक्षे सर्वज्ञसन्तानैकरूपमोक्षपक्षेऽपि बन्धमोक्षान्वयिनः फलसम्बन्धिनोऽभावात् न[5] पुरुषार्थो मोक्षः । तथा आर्हतपक्षेऽपि आत्मा चिद्रूपोऽचिद्रू[6]पो वेति विकल्पनीयम् । चिद्रूपश्चेत्, निरुपाधिक[7]चैतन्यस्य स्वतोऽप्रतिसंक्रमत्वात् उपाधिसम्बन्धे च बन्[8]धाविच्छेदात् अनिर्मोक्षः । अचिद्रूपत्वेऽपि चेतनानधिष्ठितस्य[9] अचेतन[10]स्य स्वयं गमनानुपपत्तिः । अतो भग्ना[11]दिव पञ्जरात् पतङ्गस्ये[12]वात्मनो बन्धविच्छेदे सति ऊर्ध्वगमनमित्यसङ्गतमेवोत्प्रेक्षितम् । ज्ञानसुखादिसकलवैशेषिकगुणोच्छेदमोक्ष[13]पक्षस्तु[14] स्व[15]रूपोच्छेदपक्षात् न विशिष्यते ; निःसंज्ञ[16]त्वाविशेषात् सुखानुभवाभावाच्चा[17]पुरुषार्थत्वात् । सुखा[18]भावेऽपि दुःखाभावात्पुरुषार्थः इति चेत्, [[19]तन्न; दुःखाभावस्यापि निःसंज्ञत्वे[20] पुरुषार्थत्वा[21]नुपपत्तेः । न खलु पाषा[22]णादेः दुःखाभावः पुरुषार्थ इति सिद्धः । यच्च[23] सांसारिकसुखदुःख]-तत्कारणं समुत्सृज्य नित्यज्ञानानन्दोत्पत्तिः आ[24]त्मनो मुक्तिः इति दर्शनम्, तन्न ; विषयेन्द्रियसंयोगा-

---

१. D omits सं
२. D omits किञ्चित्
३. D: उद्धारयामः
४. E omits पक्षे
५. A D E: अपुरुषार्थो
६. C: चिद्रूपः उताचिद्रूप इति
७. C omits क in निरुपाधिक
८. A D: सम्बन्धाविच्छेदात्
९. D: चेतनाधिगतस्य
१०. C omits अचेतनस्य
११. E: भष्टादिव
१२. A D E omit इव
१३. C omits पक्ष
१४. E omits तु
१५. D: स्वरूपावच्छेद
१६. E: निःसञ्ज्ञातत्वाविशेषात्
१७. C: भवाभावाद्वा and omits च
१८. D: सुखानुभवाभावेऽपि दुःखात्
१९. A: तद्दुःखा; D omits तत्; E omits the portion bracketed.
२०. D: निःसंज्ञकत्वे
२१. D omits त्व
२२. A: पाषाणवत्
२३. C: यत्तु
२४. C omits आत्मनो मुक्तिः

भावे[1] कथं ज्ञानानन्दयोरुत्पत्तिः[2]? आत्ममनःसंयोगादेवेति चेत्, तदपि दुरुपपादम्; आत्ममनसोरुभयोरपि सर्वगतयोः अन्यतरकर्मजस्य उभयकर्मजस्य वा संयोगस्यासंभवात्। भवतु[3] नामात्ममनस्संयोगः। तथापि ज्ञानानन्दयोः जनिमत्त्वे सति अनित्यत्वस्य दुर्वारत्वात् पुनरपि बन्धप्रसङ्गः। देशान्तरावस्थितब्रह्मप्राप्तिमोक्षपक्षेऽपि विकल्पनीयम् 'किमात्मनो ब्रह्मप्राप्तिः तादात्म्यलक्षणा संयोगलक्षणा वा?' इति। न तावदाद्यः कल्पः, अश्वमहिषयोरिव पृथक्सिद्धयोरैकत्वानुपपत्तेः। न च लवणाकर[4]निक्षिप्तपर्णतृणादेरिव लवणत्वं ब्रह्मभावनया ब्रह्मभाव इति शङ्कनीयम्; तत्र तृणपर्णाद्यवयविनः संस्थानविशेषे सति तदवयवानां लवणावयवसंयोगेन लवणगुणत्वभ्रान्तिमात्र[5]त्वात् [[6]उष्णजलभ्रान्तिवत् तस्यानुदाहरणत्वात्।] नापि रसविद्धलोहस्येव सुवर्णभावो ब्रह्मभावो[7] जीवस्य इति सांप्रतम्; तत्राप्यन्यस्यैव[8] सतः अन्यभावस्यासिद्धत्वात्[9], वर्णान्तरस्यैव सुवर्णसदृशस्योत्पद्यमानत्वात्। तस्मादन्यस्यान्यात्मत्वं दुरुपपादम्। अथात्मनः स्वतःसिद्धो ब्रह्मभाव इति शङ्केथाः, तर्हि तयोरत्यन्ताभेदे तत्प्राप्तिकल्पना न युक्ता[10]। भेदाभेदाश्रयणे च[11] भेदस्य जीवब्रह्मणोः स्वरूपत्वे सति, तन्निवृत्तौ तयोरपि निवृत्तिः स्यात्; भेदानिवृत्तौ[12] च बन्धमोक्षयोर[13]विशेषात् ब्रह्मप्राप्तिर्मुक्तिरित्येतन्न स्यात्। भेदस्या[14]स्वरूपत्वे तस्याविद्यापरिकल्पितत्वात् भेदभ्रान्तिनिवृत्तिरेव मुक्तिः, नान्यस्यान्यभावः[15]। अथात्मनो ब्रह्मप्राप्तिः संयोगलक्षणा इति मन्वीथाः,

---

१. E adds अपि

२. C: ज्ञानानन्दोत्पत्तिमार्थतो, thus omitting a big portion, up to the 12th line on page 305.

३. D: भवतु तावद्वात्मनः संयोगः

४. D: लवणनिक्षिप्त

५. D omits मात्र; E: भ्रान्तिमत्त्वात्

६. D omits the words within brackets.

७. E omits ब्रह्मभावो

८. D: अन्यत्रैव

९. D: अन्यभावसिद्धत्वात्

१०. E: अयुक्ता

११. D omits च

१२. E: भेदानुवृत्तौ

१३. A E: बन्धमोक्षावस्थयोः

१४. E omits भेदस्या

१५. E: नास्यभावः

तदापि वक्तव्यम्[1] 'किं[2] ब्रह्म सर्वगतं असर्वगतं वा?' इति। आद्ये कल्पे, युगपत्सर्वमूर्तद्रव्यसंयोगलक्षणत्वात् सर्वगतत्वस्य सर्वगतं[3] ब्रह्म आत्मनापि[4] संयुक्त एवेति नासौ संयोगः साधन[5]साध्यः। [[6]अथासर्वगतं ब्रह्म, तर्हि परिच्छिन्नत्वादनित्यत्वप्रसङ्गः सर्वगतत्वश्रुतिकोप[7]श्च स्यात्। संयोगस्य वियोगावसानत्वात् पुनर्बन्धप्रसङ्गश्च।] तस्मान्नायं पक्षः श्रुतिन्यायकोविदैरभिमतः।

य[8]च्चैतत्कैश्चिदुच्यते 'स्वतो[9] ब्रह्मभूतस्यापि जीवस्य अन्तःकरणो[[10]-पाध्यवच्छेदात्[11] वस्तुतो भावान्तरभूतस्य कर्मणोपाधिनिवृत्तौ[12] ज्ञानेन ब्रह्मभावो मोक्षः' इति, तदपि न विपश्चितां चेतसि चमत्कारमाविष्करोति; निरवयवस्य ब्रह्मणो वस्त्वन्तरेण कुठारेणेव शिंशपादेः] विदारणासंभवे सति भावान्तरत्वा[13]नुपपत्तेः उपाधिसम्बन्धस्य च[14] भेदभ्रान्तिमात्र[15]हेतुत्वात्; वस्तुनोऽन्यत्व[16]भावे सति ब्रह्मभावस्यासाध्य[17]त्वाच्च। त[18]तश्च कर्मणा उपाधिनिवृत्तिः ज्ञा[19]नेन ब्रह्मभावः[20] इत्यादि कल्प्यमानं[21]मखिलं श्रुतिन्यायविरुद्धमेव स्वमनीषिकया केवलमुत्प्रेक्षितमित्युपेक्षणीय एवायं पक्षो मुमुक्षुभिः। श्रुतिश्च "ब्रह्मविदाप्नोति परम्" (Taitt., II, i, 1) "ब्रह्म वेद ब्रह्मैव भवति"

---

१. D: विवेक्तव्यम्
२. E omits किं
३. A E omit सर्वगतं ब्रह्म
४. A C E: सर्वात्मना
५. D omits साधन
६. D omits the portion enclosed in brackets.
७. E omits कोप; omission is indicated by dots.
८. D: यत्तु कैश्चित्
९. D: ततो
१०. E omits the part within brackets.
११. D: च्छेदे सति
१२. A C D: कर्मणोऽनुवृत्तौ
१३. D: स्य for स्व
१४. A E omit च
१५. E: भ्रान्तिमत्त्वात्
१६. A C E: अन्यत्वा
१७. A: असिद्धत्वाच्च, a later correction.
१८. A E: तत्र
१९. A: निवृत्तिः स्यात्
२०. A adds निवृत्तिः, a later insertion in red ink.
२१. D: कल्पनामखिलं

(Muṇḍ., III, ii, 9) "तरति शोकमात्मवित्" (Chānd., VII, i, 3) "भिद्यते हृदय-ग्रन्थिः" (Muṇḍ., II, ii, 8) "अविद्यायाः परं पारं तारयसि" (Praśna, VI, 8) "तमेव विदित्वा अतिमृत्युमेति" (Śvet., III, 8) "विमुक्तश्च विमुच्यते" (Kaṭha, V, 1) "ब्रह्मैव सन् ब्रह्माप्येति" (Bṛh., IV, iv, 6) इत्यना[1]द्यनिर्वचनी-याविद्यानिव[2]र्तनेन स्वतःसिद्धाद्वितीयनित्यनिरतिशयानन्दपूर्णचैतन्यप्रत्यगेकतानब्रह्मा-विर्भावमात्रं मोक्षमाचष्टे । न[3] च वाच्यम् 'मोक्षावस्थायां आत्मनः सुखमात्र[4]रूपेणाव-स्थाने सति अ[5]पुरुषार्थो मोक्षः स्यात् , सुखसम्बन्धाभावात्' इति ; सुखापरोक्ष्यस्यैव पुरुषार्थत्वात् ; लोके सु[6]खसम्बन्धस्यानुषङ्गिकत्वेन पुरुषार्थत्वानु[7]पयोगात् । ननु विपरीतं किं न स्यात्? उच्यते । स[8]र्वस्यात्मनि वस्त्वन्तरसम्बन्धस्यातिशयहेतुत्वेन अर्थ्यमानत्वात् सुखसम्बन्धोऽप्यर्थनीयश्चेत् , सोऽतिशयान्तरहेतुर्वक्तव्यः ; तत्सम्ब-न्धोऽप्यर्थनीयश्चेत् , सोऽप्येवं सोऽप्येवमित्यनवस्थाप्रसङ्गात् । आ[9]परोक्ष्यं तु लोके[10] परमार्थतो[11] न सु[12]खाद्भिद्यते ; आत्मन एव स्वयंप्रकाशत्वसुखरूपत्वयोः [सा[13]धित-त्वा[14]त् त[15]द्व्यतिरिक्तसुखचैतन्ययोः] प्रमाणाभावात् । अतो नास्त्यतिशयान्तरापेक्षा । त[16]तश्चात्मनो नित्यचैतन्यप्रकाशसु[17]खरूपत्वात् सुखस्य त[18]द्व्यतिरेकानभ्युपगमात् सर्वमे-वोप[19]पन्नतरम् । अतश्च अनतिशयानन्दानुभवस्य श्रुतिस्[20]मृतिशतोपपादितस्[21]य मोक्षा-

---

१. D: इत्येवमनाद्य
२. D: निवृत्तौ ज्ञाने स्वतः ; E: निवर्तने
३. A E omit न च वाच्यं
४. A E: मात्रेणावस्थाने
५. D: अपुरुषार्थत्वं सुखसम्बन्ध
६. D omits सुख
७. E: पुरुषार्थानुप
८. D: सर्वथात्मनि
९. D: अपरोक्षं
१०. D omits लोके
११. C: परमार्थतो विषयसुखे
१२. C: स्वरूपसुखात्
१३. C omits साधि-
१४. D omits the part enclosed in brackets.
१५. E omit तत्
१६. A E: न चात्मनो ;
C: तच्चात्मनो
१७. C omits सुख
१८. A: सुखस्याभेदाभ्युपगमात् ;
E: सुखस्य भेदाभ्युपगमात्
१९. A C E: सर्वदेव
२०. A omits स्मृति
२१. A E omit स्य

वस्थायामुपपन्नत्वात् तस्यैव पुरुषार्थत्वाच्च न[1] मोक्षस्यापुरुषार्थत्वमनुमानेन[2] केनापि[3] शङ्कनीयम् । तस्मात् तत्त्वमस्यादिवाक्यजनितापरोक्षब्रह्मविद्यया अनाद्यविद्यापटल-समुत्पाटनेन नित्यसिद्ध[4]निरतिशयानन्दप्रत्यगद्वितीयपर[5]मात्मचैतन्या[6]त्मना अवस्थानं अपवर्गः इति भगवतो भाष्यकारस्य मतमाश्रयणीयं निःश्रेयसार्थिभिः[7] इति ।

श्रीमच्छङ्करभाष्यदुग्धजलधेरादाय विद्याजलं
सद्यो बोधघने[8] विनेयफलवत्सस्योत्करे वर्षति ।
तद्विद्याजलबिन्दुसंप्लुत[9]मतिश्चक्रे सदाधोक्षजे
भक्तो ज्ञानघनाभिधानगदितः तत्त्वार्थशुद्धिं मुनिः ॥

[10]इति तत्त्वशुद्धौ मोक्षनिरूपणप्रकरणम् ।

॥ समाप्तश्चायं ग्रन्थः ॥

---

१. A D have न later ; E omits it.
२. C: उन्मत्तेन ;
E: अनुन्मत्तेन
३. A omits केन
४. C: सिद्धि
५. E: परमार्थचैतन्यावस्थानं
६. D: न्यस्यात्मना
७. E: निःश्रेयसार्थी हरिम्
८. C: बोधघनः स्वशिष्य फलवत्सस्यो
९. C: जलपूरसंस्तुतमतिः

१०. The colophon in E runs: इति श्रीमत्परमहंसपरिव्राजकाचार्य-श्रीमद्बोधघन-पूज्यपादशिष्यस्य भगवद्ज्ञानघनाचार्यस्य कृतौ तत्त्वशुद्धौ मोक्षनिरूपणप्रकरणं अष्टचत्वारिंशं (?) समाप्तम्

# ERRATA

| Page | Line | For | Read |
|---|---|---|---|
| 3 | 14 | वन्ध्येतिवध्यघात | वन्ध्येतिवध्याघात |
| 4 | 5 | अद्वितीयत्व- | सजातीयविजातीयत्व- |
| 4 | 9 | खण्डलके | खण्डके |
| 4 | 12 | विशेष्य | विशेष |
| 11 | 4 | पदानमै- | पदानामै- |
| 18 | 2 | कस्याचि- | कस्यचि- |
| 19 | 2 | वास्मदादियोग्य- | वास्मदादिभोग्य- |
| 20 | 2 | नापी | नापि |
| 21 | 13 | परर्वन्त्त्वात् | परतन्त्रत्वात् |
| 22 | 3 | सर्वज्ञत्व | सर्वज्ञत्व |
| 23 | 3 | सूक्ष्मादि भेदः | सूक्ष्मादिभेदः |
| 23 | 13 | पूर्वाक्ता | पूर्वोक्ता |
| 23 | 13 | गोणरापन्न | गोचरापन्न |
| 24 | 7 | इप्यागमा | इत्यागमा |
| 24 | 13 | न तर्हि " इत्यादि | न तर्हि" (Tai. Br..... इत्यादि |
| 25 | 10 | जगतो भिन्न | जगतोऽभिन्न |
| 26 | 10 | कारणत्वेन अन्वय | कारणान्वय |
| 31 | 5 | मिथ्यात्वे | मिथ्यार्थे |
| 38 | 9 | कार्यत्वावापो- | कार्यत्वात्, आवापो- |
| 43 | 14 | ग्रहसिद्ध | ग्रहः सिद्ध- |
| 48 | 14 | बोधनं स्यात् | बोधनस्य |
| 61 | 9 | तत्कालापलक्षि- | तत्कालोपलक्षि- |
| 62 | 5 | सात | सति |
| 66 | 17 | व्यावृत्तिभ्रान्ति | व्यावर्त्यभ्रान्ति |
| 68 | 7 | संसर्गसंभवे | संसर्गासंभवे |
| 72 | 1 | अर्थान्तर | अर्थान्तरे |
| 83 | 7 | इन्द्रियोपादाना- | इन्द्रियोपमाना- |
| 83 | 8 | प्रमाणकारणत्वात् | प्रमाणत्वात् |
| 83 | 14 | ग्राहकत्व | ग्राह्यत्व |
| 84 | 2 | व्यावर्त्येरन् | व्यावर्तेरन् |

| Page | Line | For | Read |
|---|---|---|---|
| 85 | 1 | दुःखावहं | दुःखापहं |
| 85 | 6 | धर्मिविशिष्ट | धर्मी विशिष्ट |
| 86 | 12 | प्रामाण्दे | प्रामाण्ये |
| 87 | 11 | शयवत् इन्द्रिय | शयवदिन्द्रिय |
| 88 | 1 | त तस्य | न तस्य |
| 90 | 1 | इत्यदिवाक्यं | इत्यादिवाक्यं |
| 90 | 14 | पमाणं | प्रमाणं |
| 91 | 2 | वेदयाति | वेदयति |
| 91 | 3 | ज्ञानव्यधाने | ज्ञानव्यवधाने |
| 91 | 8 | पुरुष: | पुरुषे |
| 91 | 10 | तक्तृज्ञान | वक्तृज्ञान |
| 91 | 13 | निवारायामः | निवारयामः |
| 91 | 14 | तस्मात | तस्मात् |
| 92 | 3 | शिरः पर | शिरः पद |
| 93 | 8 | लभ्यामाने | लभ्यमाने |
| 93 | 12 | वेशादे | केशादि |
| 94 | 1 | बाधिततपक्षत्वात् | बाधितपक्षत्वात् |
| 94 | 3 | अनेकान्तिक: | अनैकान्तिक: |
| 94 | 4 | लब्धरूपोदकादिषु | लब्धमूलोदकादिषु |
| 95 | 13 | [... जन्यो न ; | [ ... जन्यः, |
| 95 | 15 | ' किंसंभवं] प्रमा· | ' किं संभव]प्रमा- |
| 95 | 16 | अनाप्त- | आप्त- |
| 97 | 5 | प्रपवश्चस्य | प्रपञ्चस्य |
| 100 | 1 | " येनाश्रुतं श्रतं | "येनाश्रुतं श्रुतं |
| 100 | 1 | अर्थवादा- | अर्थवादो- |
| 101 | 4 | मिथ्यात्वशब्देनैव | मिथ्याशब्देनैव |
| 102 | 12 | आत्मना | अन्यात्मना |
| 104 | 6 | पूर्वस्मिम् | पूर्वस्मिन् |
| 106 | 4 | मुख्यार्थम- | मुख्यार्थत्वम- |
| 106 | 12 | दवीये | दवीयो |
| 109 | 2 | दस्तर्के | दुस्तर्के |
| 110 | 6 | वन्धकामावा | बन्धकमावा |
| 111 | 8 | कारणतिरिक्त | कारणातिरिक्ता |
| 111 | 17 | धर्मिज्ञान | धर्मि ज्ञान |

| Page | Line | For | Read |
|---|---|---|---|
| 115 | 1 | भ्रान्तितो ख्याति | भ्रान्तितोऽख्याति |
| 117 | 5 | रूप्यदिज्ञान | रूप्यादिज्ञान |
| 119 | 10 | सुषुप्तयोः | विविक्तयोः |
| 120 | 13 | अनन्यथासिद्वा | अनन्यथासिद्धा |
| 122 | 11 | तदंशसंसर्गयोः | तदंशसंसर्गस्तयोः |
| 126 | 15 | अत्यन्तसुषुप्तस्य | अत्यन्तमप्राप्तस्य |
| 128 | 5 | सिद्धत्वात् | सिद्धित्वात् |
| 129 | 4 | अनवश्यकत्वात् | अनावश्यकत्वात् |
| 129 | 4 | सर्वगतात्मवादिन | सर्वगतत्ववादिना |
| 129 | 6 | व्यतिरेकानिरूपणात् | व्यतिरेकेणानिरूपणात् |
| 129 | 14 | तज्ज्ञानादि स्वका | तज्ज्ञानादिस्वका |
| 133 | 2 | प्रतिबाध्य | प्रतिबध्य |
| 134 | 3 | मशस्य | मर्शस्य |
| 136 | 9 | विशिष्याः | विशिंष्याः |
| 139 | 10 | प्रत्ययालन्बनं | प्रत्ययालंबनं |
| 145 | 5 | करण्यतायोग्य | करण्यायोग्य |
| 147 | 4 | आ बाल | आबाल |
| 147 | 12 | व्याप्त | व्यापित्व |
| 148 | 4 | घटादि | पटादि |
| 148 | 5 | घटादि | पटादि |
| 149 | 6 | प्रमाणानाव | प्रमाणानव |
| 154 | 13 | तहि | तर्हि |
| 155 | 10 | घटादिकार्यस्य | घटादिकारणस्यापि |
| 155 | 11 | अकार्यत्वे | कार्यत्वे |
| 159 | 7 | तदा | omit |
| 160 | 12 | कालस्य च | कालस्य |
| 165 | 12 | यौगपद्ये न | यौगपद्येन |
| 165 | 12 | क्षणे, | क्षणे |
| 176 | 5 | इति भेद | इत्यभेद |
| 177 | 3 | स्वरूपसम्बन्ध | स्वयं सम्बन्ध |
| 177 | 3 | रूपो गुणश्च | रूपोऽगुणश्च |
| 181 | 3 | प्रमाणादि | प्रमातृप्रमाणादि |
| 185 | 8 | आ गोपाला | आगोपाला |
| 191 | 5 | हि संविदेव | हि संवित् संविदेव |

| Page | Line | For | Read |
|---|---|---|---|
| 193 | 3 | ज्ञानसंभवात् | ज्ञानासंभवात् |
| 197 | 16 | विषकरणा | विषयकरणा |
| 199 | 1 | मखिलं ब्रह्मा | मखिलब्रह्मा |
| 199 | 1 | पुं षट्ट | पुंषट्ट |
| 199 | 12 | नाश्रयत्वम् , तयैव | नाश्रयतयैव |
| 200 | 1 | बाधकानुप | बाधकत्वानुप |
| 200 | 9 | शयत्वेऽपि | शयवत्वेऽपि |
| 202 | 6 | द्रव्यस्य | द्वयस्य |
| 203 | 1 | ज्ञानयौगपद्या- | ज्ञानायौगपद्या- |
| 204 | 3 | प्रकाशव्यभि- | प्रकाशाव्यभि- |
| 204 | 11 | सुषुप्तिकाले, 'न | 'सुषुप्तिकाले न |
| 205 | 15 | अन्यनिमित्त | अनन्यनिमित्त |
| 207 | 15 | " आपोऽस्य | " आत्मैवास्य |
| 207 | 15 | आत्मनो वायं | आत्मनैवायं |
| 207 | 16 | ज्योतिरास्ते ", | ज्योतिषास्ते ", (Brh. IV, iii, 6) |
| 208 | 3 | गृहीतवस्तुसम्ब | गृहीत एव सम्ब |
| 208 | 9 | प्रध्वंसि, क्रिया | प्रध्वंसिक्रिया |
| 218 | 2 | श्रुत्यैक | श्रुत्येक |
| 222 | 2 | रागादा | रागादौ |
| 226 | 3 | भोक्त्रनु | भोक्त्रनत्त |
| 246 | 7 | अज्ञानसद्भा | अज्ञातसद्भा |
| 248 | 12 | परस्परे | परस्पर |
| 250 | 1 | ज्ञानसत्त्वे | ज्ञातसत्त्वे , |
| 259 | 1 | कत्वात् । | कत्वात् ; |
| 259 | 2 | स्मृतेः | स्मृतेः ; |
| 264 | 15 | तदर्थ | तदा अर्थ |
| 279 | 15 | पदार्थस्यैव | अपदार्थस्यैव |
| 280 | 3 | विशेषणवि | विशेषणा वि |
| 286 | 5 | शब्दः प्रमाणं, प्रति | शब्दप्रमाणप्रति |
| 304 | 2 | संयुक्त | संयुक्तं |
| 306 | 8 | शुद्धि | शुद्धिं |

